# राधानयनद्विशती

काव्यमिदं प्रायेण सरलपदं नेत्रमात्रमाश्रयन्त्या कल्पनया सम्भृतं पृथग्विधैरलङ्कारैर्विच्छित्तिकारि रसान्तरीतिनिचितं प्रसादादिगुणगणेन रमणीयं क्वचित् कर्तृवाच्यादिवैचित्र्येण क्वचिच्च शब्दशक्त्या गुणीभावितपदाभिधेयमर्थविशेषं प्रत्याययन्निवेदयति कवेर्लोकोत्तरवर्णने प्रवीणताम् । यावच्च टीकां प्रति दृष्टिं निपातयता साधारणेनापि झटिति शक्यत एवावसातुमृते प्रयासात् । एतदीयमुद्रणस्य कृते श्रीगङ्गानाथमिश्रैः प्रहितं पुस्तकयुगलं प्रायेण मरुवादि प्राप्तवानस्मि । द्वयोरेव तयो र्लेखकप्रमादातिशयजनिताशुद्धिप्रचुरतया चिरं समालोच्य तत्र तत्र स्थानेषु यथाबुद्धि संशोधनं व्यधाम् । त्रिचतुरेषु च स्थलेषु पुरोदीरितामशुद्धि मनवधारयन्यथा मूलमास्थापयं कविस्वतन्त्रताविलसितानि शाब्दानुशासनविप्रतीपान्यपि पदानि । ततो निरुक्तमिश्राणामादेशतोऽवतरणालङ्कारव्यङ्ग्यप्रभृतिप्रकाशिकां टीकां निर्मिमाणस्समवेतया मूलं मुद्रयितुं प्रावर्त्तिषि, यत्रैकैकपूर्वरूप-

... णीयेण श्रीमुकुन्दशर्मणा

करे विकासं वहसि सदैव " इत्यादीनि प्राक् ... मन्दं स्पन्ति पद्यानि ॥

... न्दि तत्र

मदन्तेवासी क्षत्रियवंशमौक्तिकात्मा यन्त्रालयाधिपति मतितरां त्वरयन् श्रीरामचेतन सिंहस्साहायकं नाकरिष्यदिति तमाशिषा वर्धयामि। तदेवं सम्पादिते श्रीमद्दिन्दुनाथमिश्रोदीरितानुवादसहितेऽत्र पुस्तके मदीयमतेरपाटवेन सीसकाक्षरयोजकस्यवाऽनवधानेन सुलभानि स्खलितानि क्षाम्यन्तः सहृदयाः काव्यरसमास्वादयन्तु। प्रसीदतु अमुना मम श्रमेण श्रीवृषभानुजानयनं, येन शरीरावसान वेलायां मनागपि तेनावलोकितः स्यां तस्यामिति।

टीकाकृत्

श्रीबालकृष्ण मिश्रः



॥ * श्रीः * ॥

# राधानयनद्विशतीनाम खण्डकाव्यम् ।

आसीदस्मदीयनिर्माता रघुदेवमिश्रात्तजन्मा हारिताम्रकुलकमलभास्करः श्रोत्रियकलापकुमुदकाननकलाकरः शब्दसाहित्यशास्त्रसागरपारदृश्वा विश्वनाथापरनामधेयो म० म० मोहन मिश्रो मिथिलायाम् । यस्तरुणिमानमासाद्यापि विद्याध्ययनमनारभमाणो जातु सह सहोदरैः क्रियमाणे भोजने जनन्या विशेषेण बहुमानमानीतं यवीयांसं भ्रातरं म० म० सचल मिश्र मालोक्यामर्षकलुषितान्तः " मातस्तवसमस्ता एव समास्तनयाः तत्कस्य हेतोर्मदीय चेतोऽपमाननेन क्लेशपात्रतां प्रापित " मिति तामभिदधौ। अथैतस्मिन् मनीषितां कामयमानयाऽनया लेशतोऽपिक्षोभदशामस्पृशत्या " एतेन सुधिया विधास्यमानमौर्ध्वदैहिकं कर्म्म सौहित्योदर्कं भविष्यति पितॄणां, ननु त्वया वालिसेन, " पितरोवाक्यमिच्छन्ती " ति प्रतिपादनात् इति नितरामवधीरित ईर्ष्याशिखिप्लुष्यमाणमानसस्तदैव रूप्यकपञ्चकमृणरूपेण कुतश्चिदादाय वाराणसीम-

… नित्यामनन्ति केचिदि-
करे विकाशं वहसि सदैव " इत्यादीनि प्रास… …तु मिहै-
न्ति पद्यानि ॥

॥*॥ श्री: ॥*॥

मोहनमिश्रप्रणीतं

# ॥ राधानयनद्विशतीनामधेयं ॥

खण्डकाव्यम्

मैथिलश्रोत्रिय श्री बालकृष्णमिश्रप्रणीतयाटीकयासहितम्



सुदति ! सुन्दरि ! तावकलोचनं
प्रबलकालमहाभयमोचनम् ।
ललितबालजनाशयशोचनं
वसतु मे हृदि मानसरोचनम् ॥१॥

॥ टीका ॥

पदाम्भोजप्रान्तप्रणतहरिमाणिक्यमुकुट—
स्फुटोद्यच्छुभ्रांशुप्रमुदितचकोराक्षिरुचिरा ।

श्रियं लावण्याब्धिस्मरविहितनिर्मन्थनभवां

दधाना श्रीराधा मम विविधबाधां तिरयतु ॥१॥

कृतं मोहनमिश्रेण मैथिलेन(१) मनीषिणा ।

हृताज्ञानतमिस्त्रेण(२) राधानयनवर्णनम् ॥२॥

तदन्वयोदन्वति चन्द्रकेण, धमंगमालीकुसुमाकरेण ।

पङ्क्तालिभङ्गाटिशदेन गङ्गानाथेन प्रेम्णाप्रवणीकृतोऽहम् ॥४॥

विदेहभूमि द्विज(३)जातजन्मा निर्माणकर्मीकृतबन्धभुमा ।

तस्याः कृतेःकृष्णरतौस्तृष्णःश्रीबालकृष्णःप्रतनोतिभावम् ॥४॥

सत्प्रतापयशोभाजो भाजनं यो दयादृशः ।

सन्तानस्यार्थिसन्ताने श्रीरमेश्वरभूभृतः ॥५॥

अथ राधानयनवर्णनात्मकं खण्डकाव्यं चिकीर्षु-रत्रभवान् श्रोत्रियप्रवरः कविशाब्दिकचक्रचूडामणिः हारिताम्राभिधानकुलकाननकुसुमाकरोमोहनमिश्रोऽविघ्ने--न समाप्तिकामनया ग्रन्थारम्भेऽभीष्टदेवतास्तुतिरूपं मङ्गल-माचरन् प्रार्थयते–सुदतीति । शोभना दन्ता यस्या स्तथाभूते ? तेन च यौवनं व्यज्यते, इतरथैतत्पदस्य साधुत्वमेव न भवेत्, “वयसि दन्तस्य दतृ” इति हि पारमर्षं सूत्रम् ।५।४।१४१।

---

(१)कमनीयेतिवा, (२)यदाराधितराधेन इतिवा (३)सत्तीरभुक्तिद्विति इतिवा

अतएवैतद्व्यङ्ग्यसव्यपेक्षं सौन्दर्यमुपस्करोतीति न काव्यलि-
ङ्गम्, अपितु परिकरः । लोचनमित्युद्देश्यपदम्, नात
उद्देश्यविधेयपदयोः पौर्वापर्यविपर्ययलक्षणाया अविमृष्ट-
विधेयांशताया वाक्यदोषस्य प्रसक्तिः । वसतु प्रतिभातु,
अन्यथा तदशक्यमेव वर्णयितुम् । वसतेर्मुख्यार्थस्य बाधग्रस्त-
त्वयोदीरितेऽर्थे भक्तिवृत्तेरवश्यमुपास्यतया वर्णनोपयोगिनि
प्रतिभानेऽतिशयेनाभ्यर्थ्यमानत्वं तस्याः प्रयोजनमत्यन्ततिर-
स्कृतवाच्यध्वनिः । कालोयमः तदुपादानकस्य महतोभयस्य
निवर्तकम् । राधाया लोचनेन गोचरीकृताः कालभयं नाप्नु-
वन्तीति भावः । काले प्रवलत्वविशेषणस्य भये महत्त्वस्योपपा-
दकत्वान्नापुष्टार्थता, एवञ्च पूर्वोक्तोऽलङ्कारः । काले महाभयज-
ननसामर्थ्यस्य शक्तिरूपस्य कारणतामतिपत्यात्मभाव
मुपेयुषो व्यापारभावात्, तथाच सङ्करप्रयोजकरूपत्रयायो-
गादेतयो रलङ्कारयो स्तिलतण्डुलन्यायात्संसृष्टिः । नचादौ
कालमहाभयपदोपादानेन क्षतिः, निवर्तनीयतया तदुक्तेः;
तदेतदभिहितं "दुःखत्रयाभिघाताज्जिज्ञासातदपघातकेहेतौ"
इति साङ्ख्यकारिकाव्याख्यायां वाचस्पतिमिश्रैः । यद्वा
प्रवलकालं निरतिशयश्यामलम्, तादृशं च सत् महाभयमोचनम्
प्रेत्यभावनिवर्तकमिति यावत् विशेषणयोः कर्मधारयः ।

प्रबलकालस्य महाभयं यतस्तादृशं च सत् मोचनं मुक्तिकारकमिति वा। लुलितेति, लुलितवालानां लूनचिकुराणां नजानां सन्न्यासिनामितियावत्, आशये मनसि शोचनं स्मरज्वरजनितायासकरणम्, तेन चानुभावेन रुचिरतातिशयो द्योत्यते। अथवा लुलितः क्रीड़ितोवालः कचः अलकइतियावत् यत्र तथाभूतं, च तत् जनानामाशयस्य मनसः शोचनं शुद्धिकरणम्। यद्वा लुलितबालजनाशये क्रीड़ितशिशुजनाशये शोचनं कथमेषामज्ञाननाशः स्यादिति शोचत्। मानसरोचनं मानसस्यान्तः करणस्य रोचनं प्रकाशकं तमोनिवर्तकत्वात्। यद्वा मानसस्य स्पृहात्मकपरिणामस्य विषयविधया साधनम्। (१) अथवा रुचिरत्रकान्तिः नवनवोन्मेषशालिनी प्रतिभापदव्यपदेश्या प्रज्ञेतियावत् या वासनेत्यभिधीयतेऽलङ्कारकोविदैः। किंवा मानेन परिमाणेन सरोचनं कान्तिमत् कान्तिप्रयोजक-(महत्)-परिमाणवद्दिति यावत् अतएव हृदो विभिन्नपदाभ्यामुपादानेन वैरूप्यप्रतीतौ काव्यदोषप्रसङ्ग इत्यपास्तमिति विभावनीयं रसविद्याविशारदैरिति॥ अतएव वसतु, एतेन समाप्तपुनरात्तत्वशङ्काऽपि निराकृता, नियताकाङ्क्षाराहित्यस्य तत्र दूषकताबीजस्य विरहात्। तथाच तादृशलोचनप्रतिभानयाचनया कार्यभूतया राधाविषयिणी

---

त्यत्रेवप्रकृतेऽपि (१) स्तोकनमो स्तनाभ्यामिति क्रिया विशेषणेन कर्मधारयः।

कविगता रतिर्देवतावलम्बनत्वेन भावात्मकतामासादयन्ती वाच्यावगतिजनितविच्छित्तिसमुत्कृष्टविच्छित्तिसाधनास्वादविषयत्वेनोत्पलशतपत्रव्यतिभेदवदसंलक्ष्यक्रमतयाऽवन्यते, तेनेतदारोढुमर्हति तावदुत्तमकाव्यपदवीम् । परिस्कृतं चोत्तमादि काव्यताप्रयोजकं रूपं प्रदर्शितमस्माभिर्निजनिर्मितलक्ष्मीश्वरीचरितटीकायाम् । नच नते रनुपनिबन्धनान्निन्दनीयता कवेश्शङ्कितुं शक्या, वक्तृवाच्यवैचित्र्यसहकारिसमवहितादर्थतस्तस्यावासनाशालिनामभिव्यञ्जनात् यथा "नियतिकृतनियमरहिताम्" इत्यादौ, एतत्काव्यप्रकाशव्याख्याने प्रदीपे स्फुटम् । अन्त्यश्रुति वृत्त्यनुप्रासाश्च शब्दालङ्कारा इति शब्दार्थालङ्कारयोरपि संसृष्टिः । अर्थव्यक्तिर्गुणः । इहादिमान्तिमयोः वैदर्भीमध्ये च पाञ्चाली रीतिः । द्रुतविलम्बित वृत्तम् । इदञ्चात्रवैचित्र्यं यन्मङ्गलात्मकमपीदंपद्यं राधानयनवर्णनात्मकमित्येतस्यापि तदवयवत्वे नानुपपत्तिरिति सङ्क्षेपः ॥१॥

मानवतीं राधां प्रसादयितुकामः कृष्णः तदीयनयनगुणं पुरस्तात् व्यञ्जनया वर्णयति,

सुमुखि ! कामिनि ! तावकलोचनं

कमलमेव नचात्रविचारणा ।
यदिह मन्मुखपूर्णसुधानिधिं
भवति हन्त निरीक्ष्य सुमुद्रितम् ॥२॥

सुमुखीति, कमलमेवेत्यत्र रूपकालङ्कारः अपह्नुतिर्वा ? यदिति यस्मादित्यर्थकमव्ययम्। चन्द्रदर्शनेन कमलं सङ्कुचतीति कवीनां समयः । मुखपूर्णसुधानिधिरित्यत्रापि रूपकं पुरातनेनानेन नीरक्षीरन्यायात्सङ्कीर्यते, अङ्गाङ्गिभावात् । मुखे विलक्षणा ह्लादकत्वं व्यज्यते। निसः सोश्चोपसर्गयोरर्थद्वारकोपयोज्योपयोगिभावो बोध्यः, नातस्तयो र्निरर्थकत्वं पददोषः। हन्तेति समीहितस्य प्रयासे कृतेऽप्यलाभेन खेदं द्योतयति । कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धे न मुखे पूर्णचन्द्रारोपरूपेण रूपकालङ्कारेण साक्षाद्व्यङ्ग्यार्थद्वारेण वा-रतेरुद्दीपनप्रदर्शनान्मानोऽधुना न विधेयइति वस्तु ध्वन्यते। अतएव कमलसम्मुद्रणे चन्द्रे पूर्णत्वस्यानुपयोगित्वेऽपि न क्षति स्तदभिधानेन, तस्य ध्वनेरुपकारकत्वात् ॥२॥

राधामुपेक्षमाणस्य कृष्णस्यान्तिके तया तस्य सङ्गमनाय सखी काञ्चित्कथयति ।

नेत्रच्छलादर्चितवान् नु यन्त्रं
जगज्जयार्थं मदनः किमस्याः ।
सुवर्णपात्रे मृगनाभिदुग्ध—
सरस्वतीनीरजयन्तिकाभिः ॥३॥

नेत्रेति, यन्त्रमिति तन्त्रे प्रसिद्धम् । किमिति सम्भावनायाम् । सुवर्णपात्रत्वेन वदनं निगीर्यत इत्यतिशयोक्तिः । मृगनाभिः कस्तूरिका, सरस्वतीनीरं नदीजलं, "सरस्वती सरिद्भिदि, वाच्यापगायां स्त्रीरत्ने गोवाग्देवतयोरपि" इति हैमः । जयन्तिका जया, "जयाजयन्तीतर्कारी नादेयीवैजयन्तिका" इत्यमरः । मृगनाभिप्रभृतिभिः कज्जलस्य निर्माणं नेत्रे दानाय क्रियत इति वस्तुस्थितिः । अन्योऽपि जगज्जिगीषुः कनकभाजने शोभनं यन्त्रं कस्तूरिकाक्षीरादिभिः पूजयतीति नेदं नेत्रं किन्तु कामपूजितं यन्त्रमित्यपह्नुत्या निरुक्तरूपकातिशयोक्त्याचानुप्राणिता वाच्योत्प्रेक्षालङ्कारः । राधामाश्रय, न चेत् मदनस्त्वां पीडयिष्यतीति, अव्यभिचारेण नेत्रे जगज्जयकारित्वमिति वा वस्तु कविनिबद्धवक्तृप्रौढोक्ति—सिद्धेनालङ्कारेण कृष्णं प्रति ध्वन्यते वाच्यव्यङ्ग्ययो स्समानबोधनीयकत्वस्याभावात् ॥ उपेन्द्रवज्रा वृत्तम् ॥३॥

प्रणयातिशयप्रदर्शनेन राधां प्रति कृष्णमनुकूलयितुं तस्याः सखी निवेदयति—

हे कृष्ण ? राधानयनं विभाति
त्वद्दर्शनप्रेमनिमेषशून्यम् ।
कोषाद्विनिष्काशितवान् सुखड्गं
जेतुं त्रिलोकीं किमु कामभूपः ॥४॥

हे कृष्णेति, विभाति, विचित्रं भाति । तदुपपादयति त्वदिति, प्रेम्णा निमेषशून्यमित्यर्थः एवं च काव्यलिङ्गमलङ्कारः । तथात्वं चाभिधयोत्प्रेक्षते—कोषादिति त्रिलोकीमिति समाहारेण युगपत्समेषां जयोव्यज्यते । ननु कामस्य खड्गवत्त्वं कविसमयख्यातविरुद्धमित्यर्थदोषापत्तिरित्यत आह—भूप इति । तथाच भूपभावेन तस्य परिणमनात् भूपस्यच खड्गवत्त्वमौचित्यावर्जितमिति नोदीरितदोषावकाशः । तथाच परिणाममिश्रितेक उक्तोऽलङ्कारः, किमु कामेत्यत्रच्छेकानुप्रासश्च । तव कृते राधाऽतितरां सीदतीति त्वया त्वरितमनुग्राह्येति ध्वन्यते ॥४।

कृतागसा कृष्णेन प्रेषिता दूती राधादृशं विलोक्य तमाह—

नो वक्रिमश्री र्नकटाक्षरीति—
र्न स्नेहचैक्कण्यमुदारलक्ष्म्याः ।
नेत्रे तथाप्यद्य विलोकनश्री—
रन्यैव कापि प्रविभाति कृष्ण ? ॥५॥

नोवक्रिमश्रीरिति। चैक्कण्यं स्निग्धत्वम् । उदारलक्ष्म्याः स्फीतशोभायाः, राधाया इति प्रकरणप्राप्ततया न न्यूनपदता दोषः। तथापि, उक्तेष्वसत्स्वपि। अत्र विभावनालङ्कार इतिचिन्तनीयम् । अन्यव लोकोत्तरैव, अभिन्नस्य भिन्नतया-प्रतिपादनादतिशयोक्तिः। कापि, विधिमुखेनानिर्वचनीया दर्शनमात्रवेद्येति यावत् । तथाच स्वयमेव गत्वा तामवलो-कयेति व्यज्यते ॥५॥

राधायां मानाय विहितोपदेशाप्यनवाप्ततत्प्रयोजना सखी तद्वृत्तं वयस्यां ब्रूते—

सागस्यपि प्रेयसि नैव वक्रं
प्रेमार्द्रमुच्चै रनुरक्तमस्याः ।
शून्यं निमेषेण दिदृक्षु चक्षु—
स्त्रैलोक्यलक्ष्मीमधरीकरोति ॥६॥

सागसीति, सागसि सापराधे, प्रेयसि प्रियतमे, नवेति, तथा चोक्तनिमित्तिका विशेषोक्तिरलङ्कारः, अपराध-कार्यवक्रत्वानुत्पादनिमित्तस्य प्रेमार्द्रत्वस्योपादानात् । शून्यत्वं समर्थयति दिङ्क्ष्विति। काव्यलिङ्गम्। अधरीकरोतीत्यनेन त्रैलोक्यलक्ष्मीमपेक्ष्य तदीयलक्ष्म्या आधिक्यवर्णनाद्व्यतिरेकश्च । च्विप्रत्ययेनाभूततद्भावबोधकेन चक्षुषि लोकोत्तरं सौन्दर्यं व्यज्यते। राधायां मानोपदेशोनकरणीयो वैयर्थ्या दिति ध्वन्यते ॥६॥

कृष्णो राधाया वृत्तं सखीं वदति—

लज्जाभिदेऽस्यास्तु यथा यथाऽहं
यत्नानवाप्तोऽस्मि, तथातथोच्चैः ।
लज्जाभर व्यग्रतरेक्षणेन
दत्तं न किं सौख्यमतीव तस्याः ॥७॥

लज्जेति, भिदे, निवृत्तये। अस्यो इतीदमा हृदयसन्निहिता परामृष्यते, नतुवाह्यप्रत्यक्षविषयभूता, अग्रेतनेन तस्या इत्यनेन विरोधापत्ते रितिध्येयम्। उच्चैरिति सौख्यविशेषणम्। भरोऽतिशयः, तथा च लज्जाभेदनोपायप्रयत्नेन

लङ्कातिशयजननाद्व्याघातालङ्कारः। ईक्षणेन नयनेन, इहैव तस्या इत्यस्य सम्बन्धः। दत्तमित्यादि, किं नदत्त मपितु दत्तमेवेति काकाक्षिप्ततया गुणीभूतं व्यज्यते। एवं सति प्रहर्षणालङ्कारः वाञ्छितात् लज्जाभेदनजनितसौख्यादधिकस्य सौख्यस्य प्राप्तेः। त्वयासौ तथा शिक्षणीया, यथाऽसैव मयि त्रपां त्यजेत् इति, कीदृशी तवशिक्षणपरिपाटी यत्प्रेयसः प्रयत्नेष्वपि मनागपि लज्जां नात्यजदित्युपालम्भोवा ध्वन्यते ॥७॥

सापराधतया प्रसादनसतृष्णेन कृष्णेन निभृतं प्रेषिता दूती राधामभिदधाति—

कनकसुन्दरि! नागरि! राधिके!
बडिशमेव लसत्तव लोचनम्।
मदनतन्त्ररसेऽधिगतां वशं
हरिमनश्शफरीं नयते यतः ॥८॥

कनकेति, उपमया गौरवर्णत्वं व्यज्यते। नागरीति, नगरवासिनीत्यर्थः। एतेन कलाकुशलत्वं चातुर्यंच प्रसादनकार्यसाधनं व्यज्यते। बडिशं मत्स्यमुखवेधकं सूक्ष्ममायस-

मस्त्रम्। तन्त्रमनुशासनम् सएव रसोजलं, तत्र। वशं वशतां भावेनिर्देशात्। प्रौष्ठीं शफरीम्। नयते नतु नयति क्रियाफलस्य कर्तृगामित्वात्। शफरीवशयोः नीधातु कर्मत्वमवसेयम्। यतइति, अत्रोत्तरवाक्यगतत्वेन यच्छब्दस्य पूर्वार्धे तच्छब्दविरहेऽपि न निराकाङ्क्षत्वक्षतिरिति प्रदीपे-स्पष्टम्। सावयवरूपकमलङ्कारः,अङ्गेन सममङ्गिनो रूपणात्। तथाच यथा वड़िशविद्धा शफरी नितरां दूयते,तथा कृष्णोऽपि तव लोचनेन गोचरीकृत इति त्वया मानो न विधेय इत्यलङ्कारेण वस्तु ध्वन्यते ॥८॥

परिहासोक्त्या नेत्रसौन्दर्यं वर्णयन्ती सखी कृष्णम-भिमुखीकर्तुं राधां कथयति—

रसिकसर्वमनोरथकारिके ?
ठकपुरीसदृशे तव लोचने।
यदनुरागठकैरिह बध्यते
किमपि हर्तु महो हरिरुच्चकैः ॥९॥

रसिकेत्यादि सम्बोधनपदम्। एतच्च सखीकर्तृकं परिहासाभिधानमिति न वर्णनीयश्चैवताफकर्षतोभावापक-

र्वदोषस्य प्रसङ्गः। अतएव कविना परिहासेऽपि कारिके इत्येवाभिहितं न तु पूरिके इति। त्वां विलोक्य रसिका आलिङ्गनादिमनोरथं कुर्वन्तीति सौन्दर्यातिशयो द्योत्यते। सदृशे इति, वक्ष्यमाणरूपकानुप्राणिताऽऽर्थोपमालङ्कारः। अनुरागठकैः अनुरागैरेव वञ्चकैः, रूपकम्। इह, लोचनयोः अहोइति विस्मये, उन्नतस्य हरणकर्तुः कृष्णस्य बन्धनात् अतएव हरिपदोपादानं परिवृत्त्यलङ्कम्। ठकः किमपि ग्रहीतुं बध्नातीति। त्वदीयलोचनेनानुरागेण बद्धः कृष्णोऽवश्य-मनुकम्पनीय इति ध्वन्यते ॥९॥

प्रभातेऽपरित्यक्तमानाया राधायास्सखीं प्रति कृष्णः प्रतिपादयति—

यत्नैरनन्तैरपि नो जहाति
सम्मुद्रणं यद्यपि नेत्रमस्याः।
जातं तथाप्यद्य जगज्जयिश्रि
सञ्चुम्बितं सत्किमपि प्रभाभिः ॥१०॥

यत्नैरिति, अनन्तैः शपथादिगोचरैः। जहातीति वर्तमान सामीप्ये लट्, जहातिस्मेत्यर्थः। कारणे सति कार्यस्यानुदया द्विशेषोक्त्या ईर्ष्यातिशयो व्यज्यते। प्रभाभिः औषसीभिः अतएव अद्येति, सदित्यनेन हेतुत्वं चुम्बने व्यज्यते। प्रभातं विलोक्य भवितव्य—

द्विरहभीत्या मानं मुमोचेति कृष्णं वि[illegible]धन्ती रा
श्रितारतिः, किञ्च महानायासो मया निशायामनुभूत इ
परमनया नैवं विधेयऽमितित्वयाऽवश्यमुपदेश[illegible]ति प्रतीयते।

राधायास्सखी वयस्यामपरांसमादिशति—

लज्जाभराकुञ्चितमप्यवश्यं
कान्तं दिदृक्षु प्रणयेन तस्याः ।
मन्दं चलत्पद्म सुगुल्फदृष्ट्या
पीयूषवृष्टिं नयनं करोति ॥११॥

लज्जेति। तस्या राधाया, नयनं सुगुल्फदृष्ट्
शोभनं गुल्फदेशं गोचरयन्त्याद्दृष्ट्या, पीयूषवृष्टिं करोति, न
कुरुते, क्रियाफलस्यानन्दविशेषस्यान्याश्रितत्वात्। असम
वद्वस्तुसम्बन्धनिवन्धना निदर्शनाऽलङ्कारः। लोचनं वि
नष्टि लज्जेत्यादिना, अवश्यं वश्यभिन्नं दिदृक्षयाऽऽत्मनोऽ
रवशंच। अपिनाक्षणप्रभावद्यापाततो लज्जापारवश्यवश्
त्वसामान्याभावयो विरोधस्य प्रतिभासनात् द्वितीयपक्षे
वश्यत्वस्य विशेषाभावात्मकतयातद्पाकृतेश्च विरोधाभास
ऽलङ्कारः। यद्वाऽवश्यमिति दिदृक्षाविशेषणम्, आकुञ्चित
मपि दिदृक्ष्वितिसम्बन्धः। चलदित्यस्य मन्दपदार्थान्वित
र्थकत्वेऽपि समासाघटकपदार्थान्वितस्वीयवृत्तिग्रहमुख्य

विशेष्यकत्वविरहेण सामर्थ्यसत्त्वात्तत्सोपपत्तिः। कवि निबद्धवक्तृप्रौढोक्तिसिद्धया निरुक्तनिदर्शनया तादृशनयनं रुचिरत्वातिशयोध्वन्यते ॥११॥

मयि कीदृशोऽनुरागो राधाया इति कृष्णेन पृष्टा तस्याः सखी तमनुभाव मुखेनावेदयति—

हृदयनाथ ? मदालिविलोचनं
मुररिपो ? विधुकान्तमणिः किमु ।
यदिह शारदपार्वणतावको--
दितमुखेन्दुमभिद्रवति स्फुटम् ॥१२॥

हृदयेति। हृयञ्च सख्या हृदयनाथत्वेन स्वस्य तथा प्रयुक्तिरौपचारिकी, हृदययोरैक्याध्यासात्। एतेन तदीय हृदयाखिलवृत्तान्ताभिज्ञत्वं व्यज्यते। विधुकान्तमणिः चन्द्रकान्तशिला। अभि, लक्ष्यीकृत्य, कर्मप्रवचनीये द्वितीया। स्फुटं साक्षात्क्रियमाणम्, तेन द्रवेऽताधिकत्वशङ्का न विधेयेति ध्वन्यते। रूपकानुप्राणितोत्प्रेक्षालङ्कारः, कृष्णविषयिणी निरतिशया रती राधाश्रितायोत्यते। मात्रसंशयालंकारः, यदि त्वाद्विनैककोटिनिश्चायकरूपप्रदर्शनादेवमग्रेऽपि ॥१२

राधिकया दृशा निरीक्षितं तामनुसरन्तं कृष्णं विलोक्य सखी तां प्रति वदति। यद्वा कृष्णोमानिनीं राधां नयनप्रशं

स्या प्रसादयति ।

प्रियतमे ? तव लोचनमुच्चकै
र्मृगपतिर्बलवान् तरलः किमु ।
रसिकचित्तगुहान्तरमागतं
यदवधीत्कुलधैर्यमतङ्गजम् ॥१३॥

प्रियेति । उच्चकैः उन्नतः तरलः चञ्चलः, रसिकस्य चित्तमेव गुहाकन्दरा तस्या अन्तरमभ्यन्तरमागतं, कुलेऽवस्थितं धैर्यं कुलधैर्यम्, शाकपार्थिवादित्वात्समासः । कुलेत्यनेन धैर्ये दार्ढ्यं व्यज्यते । तदेव मतङ्गजमवधीत् । कन्दरान्तःस्थितगजहन्तृत्वे तद्योग्यतापूरणद्वारा उच्चकैरित्यादि विशेषणत्रयस्योपयोगिभावेन परिकरः, परम्परितरूपकानुप्राणितोत्प्रेक्षा, कृष्णचित्तगुहेत्यादि विशेषे वक्तव्ये रसिकेत्यादिसामान्यस्याभिधानादप्रस्तुतप्रशंसा चालङ्कारः । कटाक्षे तैक्ष्ण्यं कृष्णमालिङ्गयेत्यादि च वस्तु अलङ्कारेण ध्वन्यते । नच गुहापदं पुरीषव्यञ्जकतयाऽश्लीलमितिवाच्यं गुहपदस्यतथात्वेऽपि गुहापदस्यातथात्वात् "भगिनी- भगवत्याद शिवलिङ्गगुहादिषु......अश्लीलं नैव दुष्यति" इत्यनेन तत्र तत्तत्पादेश.ञ्च ॥१३॥

पूर्वेद्युर्विषण्णमपरेद्युः प्रसन्नं कृष्णमवलोक्य

सुरतमपह्नुवानां मानापनोदनमपलपन्तीं राधांप्रति सखी वदति—

प्रियतमे ! भवदीयविलोचनं
चतुरवैद्यजनः किमु राधिके? ।
कमपि दिव्यरसं परिदाय य-
द्धरिमनोगतदुःखमपाकरोत् ॥१४॥

प्रियेति । कमपि लोकोत्तरम् । मनोगतदुःखशामकत्वेन शारीरकदुःखमात्रनिवर्तकेतरौषधिवैलक्षण्यात् । रसं प्रणयं तदेव भैषज्यम्. श्लेषभित्तिकव्यतिरेकानुप्राणितोत्प्रेक्षालङ्कारः । रसपदशक्त्या रात्रिसुरतं वस्तु ध्वन्यते ॥१४॥

राधया कटाक्षेण वीक्षितमुन्मत्तं कृष्णं चक्षुषा साक्षात्कृत्य सखी तामाचष्टे—

लसति ते नयनं किमु राधिके ?
तुलितनास्तिकसर्वमतं सखि ? ।
नयवचोगुरुभीतिविसर्जनं
निपुणमेव हरिं यदशिक्षयत् ॥१५॥

लसतीति । तुलितं नास्तिकस्य सर्वं मतं सिद्धान्तो-येन तथाभूतम्, नयवचः नीतिवचनं न्यायदर्शनं च, गुरुभीतिः श्रेष्ठेभ्यो भीतिः प्रभाकरमीमांसकभीतिश्च। नास्तिकग्रन्थे नैयायिकादीनां मतं विस्तरेण निराकृतम्। उपमितभूतस्य नास्तिकमतस्य शिक्षायाः कर्मत्वेन कर्तृत्वस्यबाधेऽपि विवक्षातः कारकाद्योभवन्तीति कर्तृत्वस्य विवक्षया सौकर्येण शिक्षालाभहेतुत्वं नयने व्यज्यते। उपमानोपमेय भाव प्रातिलोम्यात्प्रतीपालङ्कारः। तथाच तवकृते कृष्ण एवं-विधोजात इति तमनुगृहाणेति ध्वन्यते ॥१५॥

राधया दृशाऽवलोकितस्य कृष्णस्य दशामवसाय सचकिता सखी तामाह—

लसति ते नयनं वृषभानुजे !
विषमदामृतपूर्णमिदं किमु ।
यदनुगो रसिकोऽपि सकेशवः
पतति मूर्छति जीवति सम्प्रति ॥१६॥

लसतीति । वृषभानुः राधाया जनयिता। मदोमद्यम्। अनुगो निषेवकः, प्रकरणादिसाचिव्येन धातोरनेकार्थक-त्वात्। रसिकः औषधवान् प्रणयी च, पततीत्यादि यथा-

कमं सिषादिनिषेवणस्य फलमिति यथासङ्ख्यम्, अनुगत्व-स्य पतनादिनिष्पादकतया काव्यलिङ्गं, रसिकत्वपतनयो-रापाततोविरोधस्फुरणात् विरोधाभासः पतनाद्यनेकक्रि-यास्वेकस्य माधवस्य कर्तृत्वेन दीपकं चालङ्कारः । अद्भुत-रसोव्यङ्ग्यः । अन्यत्तु पूर्ववत् ॥१६॥

स्वकीयागमनवीक्षणेनसङ्कुचितं राधालोचनमालोक्य प्राप्तपरानन्दः कृष्णोवर्णयति–

आमीलितप्रान्तविकाशिताभ-<br>मानन्दकन्दं जगदेकसारम् ।<br>सम्पूर्णपीयूषमयूखमुख्या<br>नेत्रं विधत्ते किमु मोक्षलक्ष्मीम् ॥१७॥

आमीलितमिति । निमीलितमविद्ययावृतश्च, निर-तशयसुखस्य मोक्षत्वेन ब्रह्मात्मकतयाऽविद्ययाऽऽवरणस-म्भवात् । ततः प्रान्ते अपाङ्गदेशे अविद्याया नाशकालेच, वि-काशिता दीपिता उत्पादिताच, आभा कान्तिरन्तःकरणवृ-त्तिश्च यस्य तत्, यद्वा विकाशिता दीपिता साक्षात्कृताच, अभा कान्तिः प्रकाशोवा, विग्रहवाक्ये घटस्यस्वरूपमितिव-दभेदे षष्ठी ब्रह्मणः प्रकाशात्मकत्वात् । स्नातानुलिप्तइतिवत्-

समासः, कन्दं मूलम् "एतस्यैव मात्रामुपजीवन्ति" इति श्रुतेः। जगत्सु एकं सजातीयद्वितीयरहितं, सारं श्रेष्ठम् परमार्थसच्च। आर्थपरिसंख्याऽलङ्कारः, नेत्रभिन्नेहि सारत्वं व्यवच्छिद्यते। सम्पूर्णेत्यादौ पूर्णेन्दुमुख्या इत्यशंके लुप्तोपमाश्लेषभित्तिकोत्प्रेक्षा च। तादृशनेत्रदर्शने आवश्यकत्वं परमाभोष्टदाय कत्वं च व्यज्यते ॥१७॥

प्रणयविधुरांराधामवधार्यान्यत्र गतं कृष्णंप्रतितया-सहसङ्गमनाय सखी ब्रूते—

हा निर्निमेषं भयशून्यमुच्चै-
रन्तर्बहिः स्नेहरसार्द्रमस्याः।
कृष्ण? त्वदाभामृतपानमात्रे
नेत्रं सतृष्णं वृषभानुजायाः ॥१८॥

हेति खेदद्योतकम्। भयशून्यं गुरुजनादेः कलङ्कादेः कान्तारगमने व्याघ्रादेश्च भीत्या रहितम्। अस्या इतीदमा मनसि सन्निहिता परामृश्यते। मात्रपदेन विषयान्तरविरति र्द्योत्यते, परिसंख्यालङ्कारः। दर्शनेन तामनुकम्पयेति ध्वन्यते ॥१८॥

राधाविलोकनेन गुरुभीतिप्रभृति कुलागतगुणगण-विधुरितं राधाश्लेषादिकमलभमानं कृष्णमधिगत्य सखी तां निगदति–

प्रियतमे ! बत !! तावक लोचने
भजतु को रसिको गुणलब्धये ।
सुमुखि ! येन तदीयनिषेवकः
सपदि कौलगुणैः परिमुच्यते ॥१६॥

प्रियेति । त्वदवलोकनेन महत् कष्टमापतितं कृष्णस्ये-ति खेदद्योतनाय बतेति; को भजतु नकोऽपि भजिष्यतीति व्यज्यते । कौलगुणैः त्रपाविनयगुरुभयादिभिर्गुणैः, सपदि, न तु विलम्बेन । गुणलब्धये क्रियमाणेन भजनेन गुणविमुक्ति रुदयत इत्यर्थस्य प्रतीत्या विषमालङ्कारो व्यङ्ग्यइतिध्येयम् । नेत्रस्य निन्दयास्तुतेरभिव्यक्तेर्व्याजस्तुतिरलङ्कारः । तव वि-लोकनेन कृष्णस्तादृशींदशामासादयदिति तं कृतार्थयेति ध्व-न्यते ॥ १६ ॥

सखी राधायानेत्रं कृष्णप्रीतिद्योतनाय सखीं प्रति-वर्णयति

दामोदरालिङ्गनजः प्रमोदो

देहे ममौ यो नहि राधिकायाः ।
स एव नेत्रच्छलतो बहिः किं
हरिं दिदृक्षु स्तनुमान् बिभाति ॥२०॥

दामोदरेति । ममौ मातिस्म । सापह्नवोत्प्रेक्षालङ्कारः । कृष्णविषयिणी रतिर्ध्वन्यते ॥२०॥

कृष्णप्रीतिं गोपायन्तीं राधां प्रति सखी वदति

भवति ते नयनं मधुपस्सखि ?
मधुरिपोर्मधुरं सुमनोगतम्
कमपि दिव्यरसं परिहृत्य यत्
पिबति नन्दति चन्दति हृष्यति ॥२१॥

भवतीति । मधुरं माधुर्यवदनुकूलंच, शोभनं मन एव सुमनः प्रसूनं, तद्गतम्. रसमनुरागमेव रसं मकरन्दं, परिहृत्य आकृष्य , चन्दति आह्लादमेति, श्लेषानुप्राणितं सावयवरूपकं दीपकंचालङ्कारः । ध्वनिः पूर्ववत् ॥२१॥

सुमुखि ! तावकलोचनमम्बुधि
हरिमुखेन्दुविलोकनमोदितम् ।

यदयि ! तत्र गतं सुमनोहरे:
किमपि दिव्यरसामृतमाददे ॥२२॥

सुनुणीति । मोदितं जातहर्षं प्रबुद्धश्च, चन्द्रदर्शनेन-वारिधिर्वर्धत इति स्थितिः । तत्र, नयने,शोभनं मनएव सुमनादेव:, दिव्यरसं दिव्यानुराग मेव दिव्योरसो यत्र तथाभूत ममृतम् । आददे जगृहे । पुरा किल समुद्रस्य मन्थने सति सुरास्तत्र गत्वाऽमृतमास्वादयामासुरिति पौराणिकी कथा । श्लेषमूलकं सावयवरूपकमलङ्कारः । ध्वनिः पूर्ववत् ॥२२॥

राधाया दृशा सकृदपि विलोकितः कृस्यान्तरकरण-व्यासक्तहृदयोऽपि कथङ्कारमतितरां तदायत्ततामुपाययौ नान्यस्या इति कयाचिद्वयस्यया ऽनुयुक्ता तस्यास्सखी तां स माद्धाति–

निजानुशिक्षाव्यतिगं विबन्धुं
चण्डप्रतापः किमु कामभूपः ।
विनिर्ममे हा! निगडं प्रकोपा—
न्मनोहराचीनयनच्छलेन ॥२६॥

निजेति । निजानुशिक्षाव्यतिगं स्वकीयानुशासनम-

तिक्रान्तं जनम्। इदञ्च कोपविषयत्वे हेतुः। निगडं शृङ्खलाम्, विनिर्ममे विरचयाञ्चकार, महान् क्लेशः समापतितोजनाना मिति खेदातिशयद्योतनाय हेति। बाणैर्बाधितुमशक्यस्य निगडेन तथाकरणाद्बाणापेक्षया विलक्षणकार्यकारित्वेन नयननिगडे व्यतिरेकोव्यज्यते। अपह्नुतिःरिणामाभ्यां लब्धात्मभाःोत्प्रेक्षालङ्कारः क्रिमु कामेत्यत्र ःछेकश्च। इहयथा न प्रसिद्धिविरोधदोषापातस्तथोक्तमधस्तात् ॥२३॥

राधया दृशाऽवलोकितं मदनवेदनाभिरतिखिद्यन्तं कृष्णं दृष्ट्वा संजातकारुण्या सखी तेन सङ्गमयितु तामभिदधाति–

लसति कामिनि ! तावकलोचनं
वुधवचोऽविषयोऽतनुमार्गणः।
यदनयत्परमाणुसमं हठात्
मुररिपो हृदयं शतखण्डताम् ॥२४॥
सुमुखि ! सुन्दरि ! तावकलोचनं
वुधवचोऽविषयोऽतनु मार्गणः।
स्पृशति नैवकदाऽपि हरेर्मनो
व्रणमयं कुरुते तदरं यतः ॥२५॥

लसतीति। असनुमार्गणः कामवाणः। परमाणुसमं निरवयवत्वादतिसौक्ष्म्याच्च। हठात्, नतुकमपि अपराधम-भिवीक्ष्य। शतखण्डतां शतंखण्डान्यस्य तत्ताम्। अनयदित्य-न्तं बुधवचोऽगोचरत्वेहेतुः। निरवयवत्य वाणान्तरेण भेद-नमशक्यम्, परेनतद्विहितमिति तदपेक्षया नयनात्मके कामवाणे लुप्तोपमयोपजीवितोव्यतिरेकश्शोभातिशयं पुष्णा-तीति लुप्तोपमाव्यतिरेकयोस्सङ्करः रूपकेणसंसृष्टिश्चा-लङ्कारः। त्वदवलोकनेनकृष्णश्शतधा भिद्यमानमान सोजात स्तस्मात्तमनुकम्पयेति द्योत्यते॥एवमग्रेऽपिज्ञेयम् ॥२४॥ सुमुखीति। स्पृशति, संयुनक्ति। इह स्पर्शं विनैव तद्विशेषकार्यं स्यव्रणमयत्वस्यजनं नाद्भिभावनया सङ्कीर्णो व्यतिरेकः॥२५॥

राधया नेत्रेण निभालित मुत्कलिकाकलापाकुलं कृष्ण मालोक्य सखी तेन सङ्गमयितुं राधामभिदधाति—

लसति ते नयनं वृषभानुजे!
बुधवचोऽविषयोऽतनुमार्गणः।
यदिह लक्ष्य माप्य हरि र्मुहु—
स्तम भिलष्यति सन्तत मात्मनः॥२६॥

लसतीति । तदित्यव्ययं तस्मादित्यर्थकम् । तं व्रणम्
सन्ततं सततं सम्यक् विस्तृतंच । इदं द्वितीयपक्षेतमित्यस्य
विशेषणम् । अन्यतो बाणाद्व्रणेजाते पुनस्तं नकोपीहते
हेतुतत्वं परीत्य मिति व्यतिरेकसमन्वयः । अन्यदखि
पूर्ववत् ॥२६॥

कृष्णेन सह सङ्गमाय सखी कलहान्तरितां राधं
व्याहरति—

तवावलोकाय दिने निशायां
निशान्त मेतं परितो भ्रमन्तम् ।
निरागसं दास मिवाच्युतं ते
तथापि नेत्रं कुरुते विचेष्टम् ॥२७॥

तवेति । अवलोकाय, नतुकस्यान्तरविश्रान्ताय । निशान्तं
गृहम् । "अभितःपरित" इत्यादिना वार्तिकेन द्वितीया
एतं दृश्यमानं त्वदीयम् । आगतंवा । भ्रमन्तं, नतु भ्रान्
भूमिष्यन्तंधा । निरागसम् अपराधविधुरम् । अत एव
च्युतपद मपि सार्थकम्, उपचारच्युतेरभावात् । तथा
उक्तेषु कारणेषु सत्स्वपि, विचेष्टम् आशया समायातस्या
नयनप्रसादानासादनमूर्च्छितम् । अनुक्त निमित्त

मूढ़ा विशेषोक्तिरलङ्कारः । नेत्र प्रसादादिना कृष्णं लुब्धं
वेति ध्वनिः ॥२७॥

राधया सकृदवलोकितःकृष्णस्तांकथयति । यद्वा
समविलोकनेन कीदृशी निर्वृतिःकृष्णस्येत्यनुयुक्तासखी
र्षवदिततदीयवृत्तान्ता राधां निवेदयति—

कनकसुन्दरि ! तावकलोचनं
जनमनोऽविषयः स्मरमार्गणः ।
यदयि !तद्ग्रण मातवत स्सुखं
भवति मुक्तिपदादपि चोत्तमम् ॥२८॥

कनके त । अप्रस्तुतप्रशंसाप्यलङ्कारः विशेषेहरीवक्तव्ये
सामान्यस्याभिधानात् । मुहुरवलोकनेन कृतार्थनीयोऽ
याचंजनइति व्यज्यते ॥२८॥

कृष्णप्रीतिमपलपन्तीं राधां सखी ब्रूते —

मा माधव स्नेहरसं वयस्ये !
सङ्गोपयस्वाद्य न गुप्त एषः ।
यस्मादकस्माद्धरिनाम मात्रे
नेत्रे विकाशोऽद्य तवान्य एव ॥२६॥

मेति। अद्यनेति, पुरापिस्नेह आसीदेव किन्तु गुप्ततयेति व्यज्यते। अन्यः पूर्वस्माद्विलक्षणः। अनुमानं विषमंवाऽलङ्कारो व्यङ्ग्यः, तादृशनेत्रविकाशेन रते रनुमितेर्गोपप्रयासेनापीष्टस्य गोपनस्यानवाप्तेश्च वाचक पदस्य विरहेऽपिप्रतीतिपथेऽवतारात् ॥२९॥

लसति ते नयनं वृषभानुजे !
किमु घटीवरयन्त्र मिदं यतः।
स्मरमनोहरमाधवभाजले
पतति तिष्ठति घूर्णति मज्जति ॥३०॥

ललतीति। घटीयन्त्रं "करीन" इति मैथिलभाषया विश्रुतम्। स्मरमनोहरः स्मर इवसुन्दरः स्मरमनसःकमनीयतातिशयेन हारकश्च। तेन निरतिशयं सौन्दर्यं व्यज्यते। दीपक मप्यलङ्कारः एककर्तृकानेकक्रियायास्सत्त्वात्। राधाश्रिता कृष्ण विषयिणी प्रीतिः प्रतीयते ॥३०॥

कृष्णेराधायाः प्रवृत्तिं पृष्टवतीं वयस्यां सखी ब्रूते—

विश्लेषभीत्या न निमेषमेति
लज्जाभराकुञ्चितकल्प मद्य।

वैमुख्यभाग्यसुनाथदृष्टं
पश्यद्धरिं राजति चक्षु रस्याः ॥३१॥

विश्लेषेति । आ कुञ्चितकल्पम्, ईषदाकुञ्चितम् । असु-नाथ दृष्टम् असुनाथेन प्राणेशेन कृष्णेनदृष्टं, नतुदृश्यमानम्, तेनदर्शनयोस्समानकालिकत्व विरहोव्यज्यमानस्त्रपातिशयं पुष्णाति । वैमुख्यभागित्वदर्शनकर्तृत्वयो र्विरोधादुत्कन्धरा वलोकनेन तदपाकृतेश्च विरोधाभासालङ्कारः । व्यङ्ग्यार्थः पूर्ववत् ॥३१॥

कृष्णे ममप्रीति र्नकेनाऽपिशङ्क्यते प्रत्येतु मितिनास्ति भयंगुरुजनादतो निर्व्यापारया त्वयाऽऽसितव्य मित्यभिधा-यिनीं राधां सखीवक्ति—

लसति ते नयनं शफरी स्फुरद्—
घनविवेकसुजालधरैर्यतः ।
अतिगभीरसुरारिप्रभाजले
निपतिता ध्रियते वत धीवरैः ॥३२॥

लसतीति । घनत्वस्य शोभनानायतादात्म्यारोपेहे-तुता । धीवरैः सुमतिभिरेव धीवरैः कैवर्तैः । साङ्गरूप-

कमलङ्कारः श्लेषसङ्कीर्णः । तथाच कर्णाकर्णि प्रवृत्तिरियं गुरुजनमपिसंक्रमिष्यतीतिखेदद्योतनाय बतेति । गोपनायास आवश्यक इतिध्वनिः ॥३२॥

प्रणयविधुरां राधा मभिगत्योपेक्षमाणं कृष्णं तस्या स्सखी व्यपदिशति—

मम सखीनयनं किल नीरदो
भवति ते विरहे बत माधव ॥
यदिह दक्षिणमन्द समीरणो
वहति वर्षति वारि निरन्तरम् ॥३६॥

ममेति । नीरदो, ननुमेघः विवक्षितार्थाप्रतीतेः । वहतीति शत्रन्तम् । प्रावृषि दक्षिणवायौवहति वारिदोऽविरतं वर्षति सान्तरन्तुअन्यथापीति वस्तुस्थितिः । एतेनत्वया सा नोपेक्षणीया अपितुद्रुतमनुकम्पनीयेति वस्तु द्योत्यते । तव हृदये सा नवर्तत इति खेदव्यक्तये बतेति । अतएवनिष्प्रणयं माधवेत्यामन्त्रणम् । रूपकालङ्कारः । नूनमित्यस्येव किलेत्यस्यापि सम्भावना वाचकत्वेतूत्प्रेक्षा । प्रावृषस्तादात्म्यं विरहे व्यज्यते गुणीभूतत्वेनेति चिन्त्यम् । दक्षिणानिलस्य वसन्तएव प्रवृत्तेःकविसमय स्यात्तद्वाभ्युपगमे रुचतीहवस्य

स्थाने किमपीति पदनीयम् ॥३३॥

सुरतातिशयश्रमस्वेदेन जातमञ्जनद्रवं विभाते वि-
लोकयन्ती सखीराधामभिदधाति—

कृष्णेन साकं रस उज्ज्वलो या
निश्शेष मापीयत सैष नूनम् ।
अजीर्णताया स्सुदतीक्षणाभ्या
मुद्गीर्यते कज्जलकैतवेन ॥३४॥

कृष्णेनेति । कृष्णेन हरिणा तेनैव कृष्णेन श्यामद्र-
व्येण (मरीचादिना) कृष्णपदमुपक्रम्य "क्लीवेमरिचलोहयोः"
इति मेदिन्यामभिधानात् । साकं कर्तृत्वेन तदेव कर्मत्वेन ।
उज्ज्वलोरसः शृङ्गारः सएव उज्ज्वलोरसो विमलंपयः ।
आपीयत अधीयत तदेव अन्वभूयत । अजीर्णताया इति हेतौ
पञ्चमी । अजीर्णतायाः अपरिपक्वतायास्तस्याएव अजीर्ण
तायाः तरुणतायाः । सुदतीति सम्बोधनम् । श्लिष्टपरम्परित
रूपकानुप्राणितापह्नुत्युपजीवितोत्प्रेक्षालङ्कारः । यामिनी
व्यापि सुरतकौतूहल विधानं व्यज्यते ॥३४॥

कृष्णो मानावसाने प्रसन्नां राधामाचष्टे-

प्रियतमे ! तव नागरि ! लोचनं
चतुरताश्रितचारु चिकित्सकः ।
मयि प्रदाय सुदर्शन भेषजं
हरति मद्विषमज्वर माशु यत् ॥३५॥

प्रियतमइति । सुदर्शनभेषजं शोभनदर्शनमेव सुदर्शनाभिधान मौषधम् । विषमज्वरं कठिनसन्तापमेव विषमज्वरं ज्वरामयविशेषम् । आशु, नतुविलम्बेन । हरतीति वर्तमान सामीप्येलट् । अहरदित्यर्थः । सुदर्शन नामधेयेनौषधेन विषमज्वर स्सपदिशाम्यतीति वैद्यके प्रसिद्धम् । रूपकमनुपदोक्तमलङ्कारः पुनरेवं मानोनविधेय इतिध्वनिः ॥३५॥

त्वयि कथमिव मुग्धताशालिनी राधा व्यवहरतीत्यनुयुक्तः कृष्ण स्तस्यावयस्यां वदति—

द्रुतमपश्यति, पश्यति मा मिदं
प्रणयतो, नहिपश्यति, पश्यति ।
अनवलोकनत श्चल माकुलं
नववधूनयनं बत लज्जितम् ॥३६॥

द्रुतमिति। इदं हृदयसन्निहितम् तेन त्र निजेऽपित त्प्रीति-मत्वं द्योत्यते। अपङ्गतेः पङ्गतेश्चशेषे मयीत्यर्थतोगम्यते सति सप्तमीयम्। द्रुतं नतु विलम्बेन। प्रणयतइति पूर्ववाक्य विधेयान्वयि। करणस्य कर्तृत्वं विवक्षणात्, अनवलोकनतः मद्दर्शनत आकुलं सत् चलं ममालोकनाय सकलास्वाशासु व्याप्रियमाणम्। विरोधाभासालङ्कारः अपेरनभिधानेऽपि तस्य वहुशोदृश्यमानत्वात्। कृष्ण विषयिणी राधाश्रितार-तिर्व्यज्यते ॥३६॥

राधायादृशा व्याकुलतरेणकृष्णेन सङ्गमयितुं सखी तां व्यपदिशति —

अयि! नितम्बिनि! तावक लोचनं
निगड़तोऽप्यधिकं किमुवन्धने।
तदनुचिन्तनतोऽपिहि माधवो
लवमपि क्षमते क्रमितुं नसः ॥३७॥

अयीति! हि यतः। सः त्वद्यादृष्टपूर्वगतिविशेषः। उत्प्रेक्षालङ्कारः। कृष्णे कृपाकार्येतिध्वनिः। ३७॥

कृष्णो मानवतीं राधां प्रत्याह—

राधेऽतिवक्रभ्रु विलोचनं ते
यद्यप्यदो मे न तथापि भीतिः ।
औदास्य मापन्न मपि प्रकृत्तं
प्रेमातिचैक्कन्य न्निलोपि नो यत् ॥३८॥

राधइति । वक्रे भ्रुवौ यस्यतत्तथा । उक्त निमित्तिका
विशेषोक्तिरलङ्कारः मानोऽपाकरणीय इतिव्यङ्ग्यम् ॥३८॥

कृष्णस्य सविधेराधाया निश्चलं लोचनं चिरतयालोच्य
चकिता सखी वयस्यामन्यां वदति—

नयननौ स्स्मरनाविकचालिता
ऽप्यति विवेकगुणेनधृता वलात् ।
समभिवाञ्छित भारभराकुला
हरिप्रभाजलधौस्मनिमज्जति ॥३९॥

नयनेति । अपीति धृतेत्यनेनलसाकाङ्क्षम् । उक्त निमि -
त्तक विशेषोक्तयनुप्राणित साङ्गरूपक मलङ्कारः राधाश्रिता
कृष्ण विषयिणी रतिर्गम्यते ।३९॥

कृष्णे नसह सङ्गमं गोपयन्तीं राधां सखी कथयति-

क्षपय मा सखि ! माधवसङ्गमं
सपदि ते नयने वदत स्फुटम् ।
हरिकथाश्रवणो कथमन्यथा
विहसतोऽम्बुजरागविकाशिते॥४०॥

वदतिते नयनं वृषभानुजे !
यदकरोद्धरिणा भवती रतिम् ।
सुदति!यन्नहि मन्मुखसम्मुखं
भवति सम्प्रति केवललज्जया ॥४१॥

क्षपयेति । क्षपय; गोपय । वदत; अनुमापयतः । विहसतः विकाशं प्राप्नुतः । अम्बुजरागविकाशिते लौहित्येन दीप्ते । अनुमानालङ्कारः गम्यस्तुपूर्ववत् । एवमग्रेऽपि ॥४०। स्फुटम् ॥४१॥

मानिनीं राधां कृष्णे प्रसादयितुं सखी वदति—

राधेऽनुरागं दधदप्यदस्ते
नेत्रं सनाथीकृतनाथ मद्य ।

अन्तर्गतक्रोधनिवारिताश्रि
कान्ते विधत्ते विपरीतभावम् ॥४२॥

राधइति। तव अदीनेत्रम् अनुरागंदधदपि अद्य सनाथी कृत उपतापितो नाथः कृष्णोयेन तथाभूतम्,अन्तर्गत क्रोधेण, निवारिता नतु स्वयं निवृत्ता श्रीश्शोभायस्य तद्दृशं सत् कान्ते कृष्णे विपरीतभाव मनुराग प्रतिकूलाचरणं विधत्त इत्यर्थः। आचरणेऽनौचित्यं व्यङ्ग्यम्, तेनच मानेऽविधेयत्वम्। नचप्रत्यक्षे त्यदंशब्दस्य प्रयोगोनयुक्तः, तस्यपरोक्षाभिधायकत्वा दितिवेश्यम्, "अमुंपुरः पश्यसिदेवदारुम्" इत्यादि महाकवि प्रयोगाणां प्रत्यक्षेऽपि दर्शनेन तत्राऽपि शक्तेः कल्पनीय त्वात्। गूढा विशेषोक्तिः कार्याभावत्वेन कार्याभावस्य प्रतिपादनात् ॥४२॥

सखी कृष्णस्यवृत्तं तदवलोकनपरायणां राधां प्रत्याह-

प्रचुरलोचनतो वहुदर्शनं
प्रभवतीति विचार्य तवेक्षणे।
सखि! हरन्नहि पश्यति तद्दिनात्
किमपि ते रसिको रुचि मन्तरा ॥४३॥

प्रचुरेति। तवेक्षणे नयने हरन् रसिकः त्वहुदर्शने सतृष्णः कृष्णः तद्दिनात् हरणदिवसमारभ्य तव रुचिं कान्ति मन्तरा विना किमप्यन्यत् नहि पश्यतीत्यर्थः नत्वमेव तदवलोकने-परायणाऽपितु सोऽपि त्वदवलोकने तादृश इति भावः। परस्परप्रीतिमत्त्वं व्यङ्ग्यम्। विषमालङ्कारः, इष्टार्थस्य समुद्यमेऽप्यनवाप्तेः ॥४३॥

निशि निरन्तरजागरमन्थरं
वहलरागमतिभ्रममञ्जुलम्।
हरिकृतं सखि? सङ्गमसुच्चकै-
र्वदति ते नयनं नहि गोपय ॥४४॥

निशीति। मन्थरम्, अलसम्, रागोरक्तिमा प्रेमाच मञ्जुलान्तं नयन विशेषणम्। निगदेन व्याख्यातमन्यत्॥४४

कृष्णो वियोगवृत्तमपदेशेन राधां प्रति प्रतिपाद-यति—

अयि? विनोदनिधे? तवलोचनं
लषितदं भवतीति मृषा वचः।

यद्दयिते विरहे तव विस्मृतिं
जिगमिषो रयिते स्मरणं सदा ॥४५॥

अयीति । लषितदम् अभिलषितदायकम् । अयिते अतीते तवेति पूर्वपरयोरन्वेति । जिगमिषेः प्राप्तुमीहमानस्य । अप्रस्तुतप्रशंसाऽलङ्कारः विशेषस्य सामान्येन द्योतनात् । विप्रलम्भेऽस्मरणस्यानिष्टस्य लाभे : । राधाप्रेमातिशयो व्यङ्ग्यः ॥४५॥

रात्रौ हरिप्रीतिरसो निपीतः
सङ्गोप्यते , किन्तु न गुप्त एषः ।
अपूर्व मालस्य मिदं वयस्ये ?
ब्रूते हरिप्रेम तवैव नेत्रे ॥ ४६ ॥

रात्राविति । अपूर्वम् अभूतपूर्वम् । आलस्यमितिकर्तृपदम् । अवतरणादिकं प्रागुक्तदिशावऽसातव्यम् ॥ ४६ ॥

राधाया विलोकनेन प्रमुदितं कृष्ण मपरञ्च तदभावेन खिन्नः माकलय्य सखी तामाह —

हरि मनोरथदे ? तव लोचनं

कुवचोऽविवश्यः पवनाशनः ।
दशति यं, स परं सुखमेति यत्
पुनरितोऽन्यजनः परिसृच्छति॥४७॥

हरीति । पवनाशनः सर्पः । प्रतिश्रुतौ हेतुर्यदिति ।
इतः दयात् । कटाक्षे सकलकमनीयत्वं व्यङ्ग्यम् ॥४७॥

राधयाविलोकनेन प्रवणीकृतं कृष्णमाकलय्य सखी
तां वदति—

सुदति ? कामिनि? तावकलोचनं
सलिलनौरिव राजति चञ्चलम् ।
यदिह तिष्ठति तत्र कदापि यः
प्रणयनीरनिधौ स निमज्जति ॥४८॥

सुदतीति । उपमालङ्कारः इवार्थे विशेष्यतावच्छेदकत-
या विशेषणतावच्छेदकतया वा गोचरयतोबोधस्याविप्रति-
पन्नत्वात् । नेत्रे सकलवश्यकारित्वं गम्यम् ॥ ४८ ॥

जनसमजे कृष्णमुद्दिश्यातनितलोचनव्यापारां तदनु ज-
नेषु तदवबोधशङ्कया बिभ्यतीं राधां सखी व्यपदिशति—

मदनतन्त्ररते ! तव लोचनं
नरसमूहगतं सहसाहरिम् ।
स्पृशति चुम्बति मोदयति स्फुटं
पुनरिदं नहि कैरपि बुध्यते ॥ ४९ ॥

मदनेत्यादि । इदञ्च वाक्यार्थोपपादकमितिकाव्यलिङ्ग-मितिचिन्त्यम् । राधायां मदनतन्त्रविशारदत्वं शङ्काय्य मवि-धेयत्वं च ध्वन्यते ॥ दीपकविशेषोक्त्यलङ्कारौ ॥ ४९ ॥

गुरुसविधे कृष्णं प्रति सङ्केतनिकेतनादिकं सूचितव-ती मथ गुरुजनेषु तदधिगमं सम्भाव्य भीत्या कम्पितां रा धां सखी कथयति—

अयि कृशोदरि ! तावकदर्शनं
रसवता हरिणा सह सादरम् ।
गुरुजनेऽपि करोति निजां कथां
भवति सा न गुरोरपि लक्षिता ॥५०॥

अयीति । कृशोदरीति, तेन भीतिः प्रतीयते । दर्शनं न-यनम् । रसवता प्रशस्तरसयुतेन , प्रशंसायां मतुपो विधा-

नात् । गुरुजनेऽपि गुरुर्जनो यत्र तत्रापि । व्यङ्ग्यार्थः पूर्व-
वत् ॥ ५० ॥

स्वमुद्दिश्य दृशं तरसा प्रेषयन्तीं लक्षितादशामासादित-
वतीं राधां प्रति तत्सङ्गमसतृष्णः कृष्णः प्रतिपादयति—

अग्रे गुरूणामपि नो बिभेति
नो लज्जते धावति मां सतृष्णम् ॥
कर्तुं किमप्यद्य मदातिरेका—
दुन्मत्तवत्ते नयनं मृगाक्षि ! ॥५१॥

अग्रइति । गुरूणामपीति किमुतान्येषामिति दण्डापू-
पायितम् । सतृष्णमिति मामित्यस्य विशेषणम्, तेन क-
र्त्तुं किमपीत्यनेन नार्थपौनरुक्त्यम् । किमपि विशेषतो
ज्ञातुमशक्यम् । मदातिरेकात् मदस्याधिक्यात् अतएव उ-
न्मत्तवदिति । दीपकोपमे अलङ्कारौ । सम्भोगशृङ्गार-
ध्वनिः ॥ ५१ ॥

इतः परं पुराप्रतिपादितावतरणादिसदृशं सविशेषाव-
तरणादिकमदसीयदर्शनसलालसमानसेन सरसेन श्लो-
कार्थानुसारतः साधारणावतरणाच्च स्वयमेवासकृदुपदेशि-

तदिदमस्मादृतिशेमुषी विकाशेन सपदि समूहितुं शक्यमि-
ति नैवलेखनीव्यापृतिक्लेशस्तत्र लेशतोऽप्यौचित्यचारुतामञ्च-
ति, प्रयोजनविशेषाजननिप्रतीतेः पिष्टपेषणप्रायलेखनस्या-
निष्पक्षनिक्षेपात्, एतन्मुद्रणावस्थायां तदभिमतये मया-
मुहुरभिहितायामपि तत्र बहुतरविलम्बस्य जातत्वेन जाय-
मानत्वेन च ग्रन्थनिस्सृतौ तस्यामन्तरालेऽन्तरायनि-
पातभीत्या मुद्रणसम्पादनस्य विचिकित्सागोचरत्वाच्च ।
किन्तु विषमपदकतिपयकानां विवरणे गङ्गानाथशर्म-
णामनुशासने नसाधारणावतरणे समस्तपौरस्त्यप्रत्यग्रेषु च
विशदावतरणालङ्कारद्योतनीयेषु । अतस्तदवसरे ऽव-
साययिष्यन्त इतिस्खलितमेतन्मार्जयितुं निवेदयते ।

टीकाकृत्.

कृष्णप्रीतिपात्रीतये सखी मुग्धाया धामभिदधाति—

अयि कृशोदरि ! तावकलोचनं
पृथुकपोलशिलोच्चयमाप्यतत् ।
पतति नाभिह्रदे दनुजद्विषो
मुनिरिवाशु कयापि समीहया ॥५

शिलोच्चयं गिरिम् । तदिति तस्मादित्यर्थः क्रमव्यत्य-
म् । ग्रहणद्वितः कृष्णस्य इदं कपोले नाभौ चान्वेति वृत्तिश
ब्दादेकत्र विशेषणत्वेनोपस्थितस्यैवान्यत्र तथात्वेनान्वयो
हि व्युत्पत्तिं विरुणद्धि। मुनिरिवेति, असौ स्वाभिलषितला-
भाय भृगुपतनं करोतीति वस्तुस्थितिः ॥ ५२ ॥

कृष्ण प्रेमाणमपलपन्तीं राधां सखी वदति—

राधे ! हरेर्नामनि वक्रितभ्रु
नेत्रं करोषि त्वमतीवरुष्टम् ।
अन्तःस्थितप्रीतिविकाशितश्रि
नेत्रे कथं माधव मन्तराते ॥५३॥

अन्तरा विना ॥ ५३ ॥

सौभाग्यातिशयद्योतनाय सखी राधामपदिशति —

जयति तावकमेव विलोचनम्
कुटिलता मिह याति मनागपि ।
सविनयं शतधा सहसाऽञ्जसा
पतति ते चरणे जगदीश्वरः ॥५४॥

तावकमेव नान्यस्य । जयति उत्कर्षेण वर्तते । इह लो-चने । यातीति शत्रन्तं भावविहितसप्तमीकम् नतु या-ते, तेनातिशयोक्तिः । मनागपि ईषदपि । अञ्जसा शीघ्रम् । जगदीश्वरः जगती पतिः कृष्णः नतु साधारणः ॥ ५४ ॥

कथमिव राधाया नयनस्य वश्यतामुपागतः कृष्ण इति कयाचिदहृष्टराधया पृष्टा सखी तां प्रत्याह —

गुरुकलाधरमङ्गलसङ्गतं
सुकृतगम्य-मपूर्वसुखावहम् ।
वररसं जगदीशमनोहरं
प्रणयिनीनयनं सुरमन्दिरम् ॥५५॥

गुरुकलाधरमङ्गलसङ्गतं श्रेष्ठकलायाधारकं कल्याणयु-तं, सुराचार्यचन्द्रकुजैस्सहितश्च । सुकृतेन पुण्येन प्राप्य-म् । अपूर्वस्य सजातीयद्वितीयरहितस्य दुःखासम्भिन्नस्य च सुखस्य प्रापकम्, वरः श्रेष्ठः रसोऽनुरागः इच्छाच यत्र तत् । जगदीशस्य कृष्णस्य सार्वभौमस्य नारायणस्य च मनोहरम् । सुरमन्दिरं स्वर्गः । सभङ्गाभङ्गश्लेषानुप्राणित-रूपकालङ्कारः ॥ ५५ ॥

त्वयि कीदृशो राधानुराग इति पृष्टवतीं तत्सखीं कृष्णः कथयति—

हसति निन्दति यद्यपि नागर—
स्त्यजतिनैव तथापि निजां गतिम्।
प्रियतमानयनं रसतोऽवशं
स्पृशति चुम्बति मां जनतागतम् ५६

तथापि, हासनिन्दयो र्जननेऽपि। रसतः प्रणयतः। अवशं स्वतन्त्रम्। जनता जनसमूहः॥ ५६॥

कृष्णं सतृष्णयितुं राधायास्सखी तदीयनेत्रसौन्दर्यमन्यापदेशेन वर्णयति—

रे नीलाम्बुज! खञ्जनाभृत! मृगाम्भोजात!
मीनास्त्वया। श्रीराधानयनेन हन्त! समता
सन्त्यज्यतां सत्वरम्॥ श्री राधानयनस्य या
मलिनतास्संनिर्गता मज्जनात्। ताभि
स्त्वा मतिकौतुकी किल कृती चक्रे विर-

ञ्चिवर्यतः ॥ ५७ ॥

ताभिः मलिनताभिः । त्वां चक्र इति सम्बन्धः ॥५७॥

कृष्णो राधा माचष्टे—

मदनतन्त्रविचारपरायणो !
प्रकटचौरसमं तव लोचनम् ।
यदिह मामकमानसहाटकं
हरति हन्त ! विवेकसुरक्षितम् ५८

प्रकटचौरः डाकू इति मैथिलभाषायां प्रसिद्धः । हाटकं सुवर्णम् ॥ ५८ ॥

आतनितनिशाव्यापिसुरतकौतूहलां प्रासादे स्थितराधां सखी वदति—

रससमुद्रविवर्धकमुद्भटं
श्रुतिविलङ्घनकारि मनोरमम् ।
हरिमनोरथपूरकमुच्चकै—
स्तव विलोचनमिन्दुरिदं किमु ॥५९॥

रसः प्रेम जलं च। समुद्रः पुञ्जं वारिधिश्च । श्रुतिः कर्णोविद्दश्च, तद्विलङ्घनकारित्वं प्रकृते द्राघीयस्त्वात् परत्र गुरुपत्नीगामित्वात् । मनोरमं रुचिरम्, हरीत्यादि परत्र सुरते सुखावहत्वात् प्रकृतेतु तत् स्फुटमेव । उन्नतम् ऊर्ध्वदेशवर्ति । शुद्धसन्देहालङ्कारः श्लेषसङ्कीर्ण इति ।।५९।।

कृष्णो राधां ब्रूते

अपूर्वचौरस्तव नेत्रमेत्य
जनाकरे पश्यति वारकेऽपि ।
निश्शङ्कमुच्चैः परिहृत्य सेऽय
मनस्सुवर्णं न पुनर्बिभेति ।। ६० ।।

पश्यतीति शत्रन्तं जनाकर इत्यस्य विशेषणमपेरन्वयि च ।। ६० ।।

सुधाकरस्ते नयनं मृगाक्षि !
स्वान्ताश्रितं तापमपाकरोति ।
आशु स्मरं जीवयते च यस्मा—
द्भस्मावशेषं हरकोपवह्नेः ।। ६१ ।।

स्वान्ताश्रितं मनोगतम् । यस्माद्विति द्वितीयपादक्रियायामपि योज्यम् । सुधाकर इरपदे इहौचित्यचारुणी वोध्ये ॥ ६१ ॥

त्वद्वीक्षणं नावमुपेत्य कामः
सन्नाविकः प्रेमरसाब्धिमध्ये ।
संस्थाप्य मे चित्तमहो तितीर्षु
पारं नयत्येव न किं करोमि ॥६२॥

तितीर्ष्विति चित्तविशेषणम् । नयत्येव नेत्येवकारेणार्थं म.वेति ॥ ६२ ॥

राधायाः कटाक्षेण भिन्नहृदयः कृष्ण उचितमेवैतदिति-व्यक्तये कैतवापह्नुत्या तस्यानयनं वर्णयति —

राधेक्षणव्याजत एव शूरः
कामावनीशस्य भटो विभाति ।
उग्रं मनो मे विदयं हिनस्ति
भुग्नं कटाक्षं परिगृह्य भूयः ॥ ६३ ॥

भटो योद्धा। उग्रं श्रेष्ठं शिवंच । क्विदयमिति क्रिया-विशेषणम् भुग्नं कुटिलम्। निजस्वामिकामवैरित्वंहनन-कर्मतायां हेतुरिति प्रसिद्धमिति न दोषः॥ ६३ ॥

स्वापराधेन कुपितवत्या राधाया नयनेन विगलित विवेकः कृष्णस्तदीय नयनं निरूपयति—

राधेक्षणं काममहीपशूरो
रागी रसाढ्योऽञ्जनवर्मनद्धः।
भ्रूभल्लधारी सकटाक्षखड्गो
हा ! मे विवेकं रिपुमाशु हन्ति॥६४॥

रागी लोहितो जिघांसुश्च। रसाढ्यः प्रणयेनपूर्णः भेषजेन युद्धउपयोगिनापूर्णश्च। अञ्जनमेववर्म कवचं तेन नद्धः सन्नद्धः। भ्रूरेव भल्लः अस्त्रविशेषः तदीय धारणशीलवान्। कटाक्षेण खड्गेनसहितः। रिपुमिति, विवेकस्य काम वैरित्वं प्रथितमित्यत्रापि न दोषः। सावयवरूपकमलङ्कारः एककार्यकारिणो र्भल्लखड्गयोः प्रतिपादनात्समुच्चयश्च ६४

राधाया अवलोकनेन प्रमुदितमानसः कृष्णस्तां कथयति—

त्वन्नेत्र मेतज्जलदानुकारि

दत्वा रसैस्ताप मपाकरोति ।
संघूर्ण्यते ऽनन्तपथेन भूयः
प्रणर्तयत्येव मनो मयूरम् ॥ ६५ ॥

रसः प्रणयैस्सलिलैश्च । अनन्तपथेन अमितमार्गेण आकाशेन च ॥ ६५ ॥

अपूर्ववह्नि स्तव नेत्रमेतत्
यद्दर्शनेनापि मनोघृतं मे ।
अभिद्रवत्येव न तापमेति
शैत्यं परं सादयते समन्तात् ॥६६॥

दर्शनेनापीत्यपिना स्पर्शनमापाद्यते । क्रियायुगलं प्रसिद्धवह्निवैलक्षण्योपपादकम् ॥ ६६ ॥

बालेति नेवपरिच्छिनोतिप्रीतिमिति नैषा सम्प्रति प्रणयोचितव्यवहारयोग्येतिराधामुपेक्षमाणं कृष्ण माकलय्य तया सङ्गमयितुं तस्यास्सखी कृष्णमभिदधाति—

आयातुकामे नवयौवनेशे
बाल्याधिपे हन्त ! प्रयातुकामे ।

स्त्रीभिर्मदः कामविकाशलक्ष्मी

रन्योन्यमाकर्षति नेत्र मस्याः ॥६७॥

तथा च पुण्यातिशयलभ्योऽयं वयस्सन्धिसमय इति कथमपि साम्प्रतमियं नोपेक्षणीयेति ध्वन्यते। अन्योन्याकर्षणेनच नेत्रे सौन्दर्यातिशयस्तथा ॥ ६७ ॥

राधायाअवलोकनेन विगलितविवेकः कृष्णस्तामनुसन्नर स्वमपास्यान्यत्र प्रयातुमुद्यतां पश्यन्नभिदधाति—

अयि प्रिये तव सुन्दरलोचनं

कितव एव, नचात्र विचारणा।

यदपहृत्य विवेकधनं जनं

निजकुलात्कुरुते चपलं पृथक् ॥६८॥

कितवो धूर्तः। विवेक एवधनं यस्य तं तथाभूतम् न केवलम्। चपलं तूर्णम् ॥ ६८ ॥

राधामपहायान्याङ्गनासक्तस्य कृष्णस्य पुरतस्तस्याः स्सखी वयस्यामन्यामाह—

दिदृक्षयैकत्र समन्ततश्श्री

स्सर्वा विचित्य स्मरभूमिपेन ।
नेत्रे धृताऽस्याः किमु यौवनस्य
सख्युस्त्रिलोकी विजयाय सद्यः ६६

एकत्रेति । एकजातीय इत्यर्थः । नेत्र इत्येकत्व मवि-
वक्षितम् नयनयो रिति यावत् । विचित्य सञ्चित्य । अ
स्याः हृदयस्थितायाः । सख्युरित्यभेदेन यौवनान्वयि । स-
द्यो नतु विलम्वेन । राधायास्सङ्गमे शीघ्र विधेयत्वं कवि-
निबद्धवक्तृप्रौढोक्तिसिद्धाभ्यां व्यतिरेकोत्प्रेक्षाभ्यामलङ्काराभ्यां कृष्णं प्रति ध्वन्यते ।। ६६ ।।

कृष्णो राधां वदति—

मधुरकोमलवाणि ? विलोचनं.
भुजग एव तवात्र न संशयः ।
यदिह मामक धैर्य्यसमीरणं
पिवति, खादति मन्नय लाजकम् ७०

पिवतीत्यादि । नयोनीतिः । सर्पस्य पवनलाजपा-
नाशनकर्तृत्वमिति वस्तुस्थितिः ।। ७० ।।

कवी राधानयनं वर्णयति—अथवा वृथैव राधायानयनं कर्णमाक्षिपतीति परिहासालापप्रसङ्गे वदन्तीं सखीमन्यासखी ब्रूते—

दाता मदन्यो न मनोरथानां
यूनां न कोपीति हि नेत्र मस्याः ।
साध्वाक्षिपत्युच्चगुणैनकर्णं
दृष्ट्याकृतार्थी कृत चित्तनाथम् ७१

मदन्यः कोपीतिसम्बन्धः । दृष्ट्येति नेत्रकर्णंचान्वेतुं शक्नोति । प्रतीयमानोत्प्रेक्षालङ्कारः । नयने दैर्घ्यं व्यङ्ग्यम् ७१

कृष्णो राधां व्याहरति—

कनक सुन्दरि ! तावक लोचनं
प्रकटमद्यपमेव न संशयः ।
पतति घूर्णति धावति वेपते
वमति मामवलोक्य रसं यतः ॥७२

रसंवमतीत्यन्वयः । रसं मद्य मनुरागंच ॥ ७२ ॥

सखी कृष्णे राधाया अनुराग मन्यां वयस्यां प्रतिबोध-
यति, यद्वा कविरेव तं वर्णयति——

आयाति याति प्रणिपातमुच्चै-
र्दधाति सम्पादयति प्रमोदम् ।
पीयूषदृष्ट्या कुरुते कृतार्थं
कृष्णं सुनेत्रं वृषभानुजायाः ॥७३॥

स्फुटम् ॥७३॥

कृष्णो राधाया लोचनं निपतदालोक्य सखीं वदति—

मुररिपोर्वदने वृषभानुजा
नयन मेतदहो पतति स्फुटम् ।
स्मरनृपो जगतीजय हेतवे
सरसिजेन रविं किमतोषयत् ॥७४॥

वदने रवित्वं प्रकाशातिशयेन बोध्यम् ॥ ७४ ॥

रहसि कथमिवैषा त्वयि तिष्ठतीति पृष्ठवतीं राधा-
यास्सखीं कृष्णः कथयति—

नोन्मिलितं यत्नसहस्रतोऽपि
संमुद्रितं यद्यपि नेत्रमस्याः ।
तथापि काञ्चित्सुरतेऽतिगाढे
विकाशलक्ष्मी मचिरात्प्रयाति ॥७५॥

काञ्चिदिति विकाशलक्ष्मीमित्यनेन संबध्यते ॥ ७५ ॥

कृष्णे राधायानयनयुगलमालोक्य विदिततदनुरागतया प्रमुदिता पुनः पुनस्तदभिलषन्ती सखी तामाह—

मदनतन्त्ररते ! तव नेत्रयो
र्मधुरिपोर्वदने पततोः स्फुटम् ।
सरसिजद्वयवान्यदि चन्द्रमा
स्समुदयेदुपमा तु तदा भवेत् ॥७६॥

" सम्भावना यदीत्थंस्यादित्यूहो ऽन्यस्य सिद्धये " इति लक्षणकः सम्भावनालङ्कारः ॥ ७६ ॥

नायिकान्तरेण सङ्गतं कृष्णमालोक्य राधा कथमिवास्ते इति कयाचिदनुयुक्ता सखी तां वक्ति, यद्वा कवि रेव वक्ति—

कृष्णं रमण्यन्तरमास्तवन्तं

दृष्ट्वापि राधानयनं न खिन्नम् ।
रुष्टं न, वक्रं न, हताश्रिनैव ,
सप्रेमगर्वेण सहासमेव ॥ ७७ ॥

रमण्यन्तरम् अन्यां रमणीम् हता श्रीर्यस्य तत्तथा । सप्रेमगर्वेण " मय्येव कृष्णस्य वर्तते प्रीतिर्नान्यासु " इत्यभिमानेन । तेन चान्यत्र तस्य गमनेऽपि न मे हानि रिति पुरेव हसतीति भावः ॥ उक्तनिमित्तको विशेषोक्त्यलङ्कारः ॥ ७७ ॥

सखी राधामभिदधाति —

विलसतो नयने तव सुन्दरि !
हरिमुखाब्ज विलोकन मन्थरे
सरसिजातरसाधिकधानतः
स्थिरमधुव्रतदम्पति सन्निभे ॥७८॥

धानतः पानतः । मधुव्रतो भ्रमरः । सन्निभे सदृशे ॥७८।

सखी राधामाह—

कृष्णं रमण्यन्तर प्राप्तमुच्चै

दृष्ट्वाऽपिराधानयनं न खिन्नम् ।
रूपं ददर्शादरतो मुहुः स्वं
त्रैलोक्यलक्ष्मीविजयैक भूमिम् ॥७९

स्वमित्यादि युगंरूपमित्यस्य विशेषणम् । तथाच नमां त्रिभुवनैकसुन्दरीं कृष्णः कथमपित्यक्ष्यति न वा मयि प्रीतिमपहास्यतीति व्यज्यते ॥ ७९ ॥

सखी राधामाह—

युवति ! तावकलोचनमम्बुधि
हरिमुखेन्दु विलोकन मोदितः ।
रसमयोऽमृतपूरतरङ्गितो
दितिसुतारि मनोरथ पूरकः ॥८०॥

पूरः प्रवाहः । दितिसुतारिः कृष्णः देवश्च ॥ ८० ॥

कविः कृष्णविषयिणीं राधाश्रितां प्रीतिं वर्णयति—

कृष्णे स्थिते दूरतरेतु राधा
नेत्र विखिन्नं विरहानलेन ।
सद्यो नवीनाम्बुधरं विलोक्य

त्रैलोक्यलक्ष्मी मत्रहृत्प्रसन्नम् ॥८१॥

प्रसन्नमिति, तेन ननोनज ठग्रे कृष्णतादात्म्यं व्यज्यते सोऽयं रूपकालङ्कार ध्वनिः ॥ ८१ ॥

कृष्णस्य राधामथमानसत्वं तां प्रति सखी वदति—

पात्रं सुरायास्तव नेत्र मेतत्
सम्पूर्ण पीयूषमयूष वक्त्रे ।
यस्मान्मुरारेर्हृदयालिनातत्
नो मुच्यते तद्रसपानलोभात् ॥८२॥

सुराया मद्यस्य। हृदयालिना मनोरूपेण भ्रमरेण ८२

राधास्थितं कृष्णगोचरं प्रेम कविर्वर्णयति—

आलिङ्गिताया हरिणा तिगाढं
नेत्रे च सन्तत्यजतु जलानि ।
हतुं श्रमं प्रेम बहिस्समेत्य
देहं रसैस्सिञ्चति किं वपुष्मत् ८३

वपुष्मत् मूर्तिमत् प्रेम आलिङ्गनविधानजनितं हरेः

श्रमं हर्तुं वहिः समेत्य समागत्य रसै र्जलैः तस्य देहं सिञ्च-ति किमित्यर्थः। स्नानेन श्रम श्शाम्यतीति वस्तुस्थि-तिः । किमिति सम्भावनायाम् ।। ८३ ॥

कृष्णो राधानयनं निरूपयति—

चाञ्चल्यभाग्धावति नृत्यति स्फुटं
प्रेम्णा नियन्त्र्याति सुशिक्षितंसत् ।
अश्वानुकारीक्षणमेतदस्याः
सम्भिद्य लोकानपि माऽनु याति ८४

अस्याअश्वानुकारि एतदीक्षणं लोकान् सम्भिद्यापि मामनुयातीत्यन्वयः। नियन्त्रितः सुशिक्षितो भवतीतिव-स्तुगतिः । उपमालङ्कारो ऽर्थश्लेष मूलकः ॥ ८४ ॥

कृष्ण वियोगमपलपन्तीं मुग्धांराधां प्रति सखि कथयति—

राधे ! करोषि त्वमतिप्रसन्ने
नेत्रे तथाप्यद्य न पूर्व शोभे ।
मन्ये ततः कृष्ण वियोग खिन्ने
तद्गोपनं मां प्रति मा विधेयम् ८५

तथापि प्रसन्नताप्रयासेऽपि । तद्गोपनं कृष्ण वियो गोपनम् ॥ ८५ ॥

सुदति ! खञ्जनचारु विलोचनं
जित यवारुचि सालसघूर्णितम् ।
हरिकृतं निशि सङ्गमसुच्चकै
र्वदति मा चतुरे कुरु गोपनम् ८६

यवा अतिलोहितप्रसूनविशेषः । सालसं चतत् घूर्णितं सालस घूर्णितम्, अतएव सङ्गमं वदति ॥ ८६ ॥

राधायाः प्राभातिकं वृत्तं कविर्वर्णयति—

कृष्णस्य रागाकुलितेन्द्रियस्य
क्रोड़े स्थिताया अपि राधिकायाः ।
नेत्रेऽतिखिन्ने विरभू तुस्ते
तारे रवे कुक्कुटकस्य जाते ॥ ८७ ॥

अतिखिन्ने इति आशुभाविविरहभीत्येतिभावः । ते, क्रोड़स्थिततया प्रसन्ने । तारे, उच्चैः । रवे, शब्दे । । कुक्कुटकस्य, ताम्रचूड़स्य । कृष्णविषयिणी राधाश्रिता प्रीतिर्ध्वन्यते ॥ ८८ ॥

कृष्णो राधामाचष्टे—

युवमनस्सुखकारिणि ! लोचनं
चतुरदूतजनोऽत्र न संशयः ।
नयति मां भवतीवशतां पदं
नयकुलव्रतमूर्ध्नि प्रदापयत् ॥८८॥

नयकुलव्रतयो मूर्ध्नि पदं प्रदापयत् मां भवतीवशतां नयतीत्यन्वयः । काव्यलिङ्गं वाक्यार्थ हेतुक मलङ्कारः ॥८८॥

भग्नसङ्केतस्थलं राधां कविर्वर्णयति—

उत्पाटिताशेषकुसुम्भवल्लीं
वाटीं विलोक्याथ विखिन्नमासीत् ।
दृष्ट्वा समृद्धं यमुनानिकुञ्जं
नेत्रं प्रसन्नं वृषभानुजायाः ॥८९॥

कुसुम्भवल्ली, कुसुमेतिविख्यातलता । प्रसन्नमिति, कुसुम्भवल्लीसमुपेतवाटीरूपे सङ्केतस्थाने तस्या उत्पाटनेन भग्नेऽपि अतः परं यमुनातीरवर्त्ति निकुञ्जमेवतदितिप्रसन्नमिति भावः ॥ ८९ ॥

दीपश्चेत्पवनाभिमुखोनतिष्ठेत् तदा त्वया न प्रयातव्यमिति निशायां कृष्णेन प्रतिश्राविवत्या राधाया वृत्तं कवि. कथयति--

दीपं समीराभिमुखं विलोक्य
प्रेयोगमस्य प्रतिबन्धहेतुम् ।
श्रीकृष्णसन्दर्शनलालसाया
नेत्रे प्रसन्ने वृषभानुजायाः ॥६०॥

प्रेयोगमस्य , प्रियतमप्रयाणस्य ॥ ६० ॥

मुग्धया राधया वियुक्त. कृष्णो वदति--

आश्लेषभीत्या प्रपलायिताया
आयापितायाः पुनरेव सख्या ।
भूमिं लिखन्त्या श्चरणाङ्गुलीभि-
र्याापि नेत्रे चकिते विलोके ॥६१॥

एवकारोप्यर्थकः । भूमिमितिद्वितीययाबुद्धिपूर्वकत्वविरहोलेखे व्यज्यते । विलोक इति, तथाच भूतस्य प्रत्यक्षायमाणताप्रतिपादनात् भाविकालङ्कारः ॥ ६१ ॥

राधाया नयने कविर्वर्णयति—

पुष्पस्यावचयच्छलेन यमुनाकुञ्जं सखीभीरहो, नीतायारतिलालसस्य निकटे शृङ्गार मूर्तेर्हरेः। हीनायास्तु सहायबान्धवजनैश्श्री राधिकाया भृशं (तदा) भीत्या ते तरले रुषाऽरुणतरे प्रेक्षणा ऽक्षिणी मोदिते ॥६२॥

रहः, एकान्ते। रतिलालसस्येत्यत्र व्यधिकरणबहुव्रीहिः। शृङ्गारमूर्त्तेरित्यत्र प्रतीयमानोत्प्रेक्षालङ्कारः वाक्यार्थबोधदिशायामेव बाधावबोधात् ॥ ६२ ॥

सखी कृष्णोवा राधायानेत्रं निरूपयति—

विवदते सुमनस्सदसि स्फुटं,
चतुरचित्तमयं कुरुते वशम्।
त्यजति नो निजपक्षमहो क्वचित्
सुमुखि! तावकलोचनपण्डितः ॥६३॥

सुमनस्सदसि, सुमनसां शोभनमनस्कानां पुष्पाणांच परिषदि। विवदत इति, एषच्च सहसुमनसा स्वोत्क-

वैचिषयकः । अयमिति पण्डितस्य विशेषणम् ॥ ६३ ॥

सरसकामिनि ! तावकलोचनं
प्रियतमाधररागविराजितम् ।
वमति रागमिमं सखि ! दर्पणे
कलय सम्प्रति माकुरु गोपनम् ॥६४

अधररागः ताम्बूलाशनजनितः, तेन विराजितत्वंच चुम्बनात्, एतच्च नेत्रे कामशास्त्रसिद्धम्, कलय, पश्य ।६४।

सखी राधां ब्रूते—

कोऽयं प्रयोगः कृत इन्दिरेशे
नेत्रेण ते साधु निपत्य तस्मिन् ।
यस्मादिदानीं रुचिमन्तरेण
नालोकते यः कमपीतरं ते ॥६५॥

इन्दिरेशे, माधवे । रुचिं, कान्तिम् ॥ ६५ ॥

राधाश्रितां कृष्णावलम्बिनीं प्रीतिं कविर्वर्णयति—

नीत्वा प्रसूनं यमुनानिकुञ्जा-
दायाति साकं यदुभि र्मुरारौ ।

सख्यास्समक्षं वृषभानुजायाः
खिन्ने प्रहृष्टे नयने स्त उच्चैः ॥६६॥

खिन्ने इति आश्लेषाद्यभावात्। प्रहृष्टे इति दर्शनात्। स्तः, भवतः ॥ ६६ ॥

कृष्णो राधाया नयनमुत्प्रेक्षमाण स्तामाह--

भ्रूसूरपुत्री सुकटाक्षगङ्गा
सद्रागवाणी परिवाह शोभि।
नेत्रं त्वदीयं किमु तीर्थराजो
यूने स्फुटं यच्छति वाञ्छितार्थम् ॥६७॥

वाणीत्यन्तो द्वन्द्वः। सूरपुत्री, यमुना, भ्रुवि तदारोपश्श्यामलत्वात्। वाणी सरस्वती, रागे तदारोपो रक्तवर्णत्वात् प्रत्यक्षागोचरत्वाच्च। वाणीजलमन्तर्वाहीति पुराणे प्रसिद्धम्। तीर्थराजः, प्रयागः। यच्छति, ददाति ॥६७॥

कविः कृष्णेन वियुक्तां राधां वर्णयति--

प्रियो द्रुतं नैष्यति दूरदेशा
दित्यालिवक्त्रादवधारयन्त्याः।

अस्त्रेण नेत्रे परिपूरिते स्तो
दृष्ट्वाऽस्त्रपुष्पाणिपुनः प्रसन्ने ॥६८॥

अस्त्रपुष्पाणि, अस्त्राण्येवपुष्पाणि । प्रसन्ने इति, पुष्पाकरस्य वसन्तस्य प्रवृत्त्याशीघ्रतरमागमननिर्णयात् । हेतुहेतुमद्भावापन्नयोर्निश्चयास्त्रसमुदययोर्यौगपद्यप्रतिपादनादतिशयोक्तिः ॥६८॥

युवति ! कामिनि ! तावकलोचनं
चतुरयाचक एव न संशयः ।
सकलमर्पयति स्फुटमच्युतो
यदिदमीयगुणेन विमोहितः ॥६९॥

इदमीयगुणेन, अस्यागुणेन ॥ ६९ ॥

कविः कृष्णवियोगानन्तरं मुग्धतादशायां राधायास्त निर्दिशति—

गतेऽपित्वर्थिनो मृताहं
हा ! कष्ट मित्येव सुदुःखितायाः ।

प्राप्तेऽपि तस्मिन्निकटं प्रियाया
नेत्रे सलज्जे न विकाशिते स्तः ॥१००॥

अपीति दूरमित्यनेनान्वयि । सलज्जे इति मौग्ध्यात् । विशेषोक्तिरलङ्कारः ॥ १०० ॥

कृष्णो राधाया नयनं तां प्रति निरूपयति—

नानास्वरूपं श्रयति, प्रमोदं
दत्ते, विधत्ते बहुभाव मुच्चैः ।
भ्रूभङ्गमात्रेण वशीकरोति
त्रैलोक्यमेतन्नयनं नटस्ते ॥ १०१॥

स्वरूपश्रयणादि विधानान्त मुभयत्र नयने नटे च सुगमम् । वशीकरोतीत्यनेन साधारणनटापेक्षया व्यतिरेको बोध्यते, तस्य त्रैलोक्यवश्यकारित्वाभावात् ॥ १०१ ॥

वियोगे राधाश्रितां कृष्णगोचरां प्रीतिं कविः प्रत्याययति—

भृशं विलोक्यापि न तृप्तिमेति

साम्रं मनागप्यवलोकनेन ।
दूरात्प्रियप्रेषितवस्तुमात्रं
पुनः पुनश्चुम्बति नेत्रमस्याः ॥१०२॥

मात्रपदं कात्स्न्यार्थकम् ॥ १०२ ॥

सखी राधां प्रत्याह—

सुदति ! वल्लवि ! तावकलोचनं
कुसुमलावक एव , यतो रसैः ।
विरहतप्तमुरारिमनस्तरुं
हरितमेव करोति निषेचयन् ॥१०३॥

वल्लवि, गोपि । कुसुमलावकः, मालाकारः । रसैः प्रणयैः तैरेव रसैस्सलिलैः ॥ १०३ ॥

जनसमाजे राधाया अवलोकनमात्रानन्तरं कथमिव तन्निकेतने कृष्णो गतवानिति पृष्टवतीं सखीं प्रति तस्या ऽसख्या निवेदयति—

कौलव्रतेनापि धृतेन गाढं
निवारितेनाप्यसकृद्विवेकैः ।
आकर्षितेनापि ह्रिया नितान्त-
माहूयतास्या नयनेन कृष्णः ॥१०४॥

अस्याः, राधायाः ॥ १०४ ॥

अयि ! कृशोदरि ! तावकवीक्षणं
भवति काककचान्वितकौशिकः ।
यदिह मे हृदये पतितं द्रुतं
समुदचाटयदीशकुलव्रतम् ॥१०५॥

कचः, केशः । कौशिको, विश्वामित्रः । ईशः, पार्थिवः । पुरा किल विश्वामित्रो हरिश्चन्द्रस्य कुलव्रतं तस्यान्तिकमुपेत्य उदचाटयत् यतः सनृपो वाराणस्यां चाण्डालदासतामासादयामासेति पौराणिकी कथा ॥ १०५ ॥

अन्याङ्गनया सह रजनिं यापयित्वा प्रभाते समागतः कृष्णो राधां प्रति सा च तं प्रति वदति--

नेत्रं वतालस्य मिदं कथन्ते ?
त्वद्दर्शनार्थं निशि जागरेण ।
रागोदयोऽयं कथमत्र राधे !
त्वद्भास्य सिन्दूररुचिप्रपातात् ॥१०६॥

त्वदित्यादि राधायाः प्रतिवचनम् । रागवित्यादिपुनः कृष्णप्रश्नः । अत्र, नयने । त्वदित्यादि राधाया उत्तरवाक्यम् । उत्तरालङ्कारः अन्याङ्गनासङ्गस्योत्तरेण द्योतनात् ॥१०६॥

कृष्णो राधामभिदधाति—

पुराणेन लब्धं सुमनोऽभिरामं
पीयूषसोदर्यमुदीर्णरागम् ।
कामानुरूपं सुफलं ददाति
त्वन्नेत्रमेतत् किल कल्पवृक्षः ॥१०७॥

सुमनः, शोभनं मनः पुष्पं च । पीयूषसोदर्यम्, आनन्दनत्वेन अमृततुल्यं, समुद्रजातत्वेन पीयूषसोदरम्, अमृतकल्पद्रुमादि चतुर्दशरत्नानि मथितात् समुद्रादुपजा-

तानीति पुराणेस्पष्टम् । उदीर्णरागमिति, उदीर्णः रागो यतः यत्रवेति बहुव्रीहिः ॥ १०७ ॥

राधिकाया एवान्तिके कृष्णः कथमविरतं तिष्ठतीति पृच्छवतीं सखीं प्रति तस्यो स्सखी कथयति—

आदाय कश्चिद्रसमद्य नेत्रं
कृष्णाय विक्रेयमदाच्छठेन ।
स्याज्या न धृत्वा दानमप्यसावि-
त्येवं हरिं तत्समुपादिदेश ॥१०८॥

रसं प्रेमतमेव रसं भेवत्रविशेयम् । असौ, रसः । तत्, नेत्रम् । तथाच रसनिमित्तकं सर्वदातदन्तिके ऽवस्थन मिति व्यज्यते ॥ १०८ ॥

अयि ! सुधामधुरे ! तवदीक्षणं
भवति सौगतसम्मतपण्डितः ।
जनककेतनबन्धुविसर्जनं
मुररिपुं निपुणं यदपाठयत् ॥१०९॥

ईक्षणं, नयनम् । सौगतो,बौद्धः । केतनं, गृहम् ॥१०९॥

कृष्णो निजगोचरां राधाप्रीतिं वर्णयति—

यथा यथा मान्यजनैर्निषिद्धं,
तथा तथा प्रेमनिबद्धमस्याः ।
यथा यथा निन्दितमालिवर्गैः,
तथा तथा धावति लोचनं माम् ॥११०

स्फुटम् ॥ ११० ॥

स्मरमनोरथदे ! तवलोचनं
विषमदामृतपूरितमुञ्चकैः ।
यदि हरिं श्रयते स तदाध्रुवं
पतति मूर्च्छति जीवति राधिके ॥११

सः, हरिः । तदा, श्रयणसमये । अतिशयोक्तिः कार्यकारणयोर्यौगपद्यप्रतिपादनात् । यथासङ्ख्यं च ॥ १११ ॥

कृष्णो राधाया नयनं वर्णयति—

चेतो हरत्याशु, जड़ं करोति,
प्रमोदमासादयते पुनर्माम् ।

कामप्यचिन्त्यां परिकल्प्य कृत्यां,
सिद्धः प्रयोगीव सुनेत्रमस्याः ॥११२॥

कृत्यां, मन्त्रादि प्रयोगम्। प्रयोगी, साधकः ॥११२॥

त्वन्नेत्रमेतद् गुणलाभकामः
को वा वयस्ये! भजतादिदानीम्।
यस्माद्धरिस्तावकनेत्रसेवी-
त्यक्तोऽधुना सर्वगुणैः कुलीनैः ॥११३॥

स्फुटम् ॥११३॥

भृशं तमिस्रां सकलां विगाढ
मालिङ्गनेनातिनिपीड़िताङ्ग्याः।
प्रेमार्द्रतालस्यविलासकान्ते
संघूर्णिते ते नयने स्मरामि ॥११४॥

तमिस्रां, रजनिम्। कान्ते, रुचिरे। तत्वंच प्रेमार्द्रतया आलस्य विलासेन चेतिद्वन्द्वोत्तरं तृतीया तत्पुरुषो ऽत्रप-दे बोध्यः ॥ ११४ ॥

सुतनु ! नागरि ! तावकलोचनं
गुरुजनेऽपि गतं सखि ! माधवम् ।
स्पृशति चुम्बति रञ्जयति स्फुटं,
बुधजनैरपि तन्नहि बध्यते ॥११५॥

स्फुटम् ॥ ११५ ॥

कविः कृष्णेनसमं राधायाः प्रथमसमागमं प्रतिपादयति—

धृत्वा भुजाभ्यां विनिवेशितायाः
क्लेशेन तल्पोपरि राधिकायाः ।
अन्तः प्रमोदाद्बहिरप्रमोदा-
न्नेत्रे प्रसन्ने मुहुरप्रसन्ने ॥११६॥

भुजाभ्यामितिद्विवचनेनोपवेशनविरोधिव्यापारो राधाया व्यज्यते । अन्तः प्रमोदात्प्रसन्ने, वहिरप्रमोदादप्रसन्ने इति योज्यम् । मुहुरिति प्रसादे ऽप्रसादेचान्वेति ॥ ११६ ॥

व्रजवधूनयनं हरिचक्षुषा
प्रणयतस्सततं सह सादरम् ।

गुरुजनेऽपि करोति निजां कथां
भवति सा न गुरोरपि लज्जिता ॥११७॥

स्फुटम् ॥ ११७ ॥

समुपजातराधिकालज्जतिः कृष्णो वदति—

संस्थापितायाः मयका निजाङ्के
करे धृतायाः उपगूहितायाः ।
मा कोऽपि पश्येदिति हा ! कुलायाः
नेत्रे विखिन्ने चकिते स्मरामि ॥११८॥

मयका, मया । उपगूहितायाः, आलिङ्गितायाः । प-रार्धे चकिते इत्यन्तेन लज्जातिशयो व्यज्यते ॥ ११८ ॥

अजवधूनयनं कुलपर्वतात्-
पतति कृष्णह्रदे किमपीच्छया ।
रससमुज्ज्वलवाञ्छितदे भृशं
त्वरिततरागतपस्विजनो यथा ॥११९॥

कुलपर्वतात्, कुलमेवोन्नतत्वात्पर्वतः तस्मात् । कृ-ष्ण ह्रदे, कृष्ण एव गाम्भीर्यात् ह्रद इवात्र । किमपीच्छ-

या, कयापीच्छया,' किमोऽव्ययत्वात् । रससमुज्ज्वलवाञ्छितदे, रसः श्रृङ्गारः स एव रसोजलं तेन, समुज्ज्वले प्रकाशमाने, वाञ्छितदेच। अन्यत्पूर्वमुक्तम् ॥ ११६ ॥

राधा जातकृष्णवियोगवृत्तं सखीं प्रत्याह—

केनापि कामेन विलोचनेन
दत्ताहमम्भोजविलोचनाय ।
किं किं न दुःखं सखि ! तेन सोढं
याते मुरारौ मथुरां कथंचित् ॥१२०॥

अम्भोजविलोचनाय, कृष्णाय । तेन, विलोचनेन । किं किं दुःखं तेन कथंचित् न सोढमपितु सर्वमेवतद्दिति-काक्वाक्षिप्यते ॥ १२० ॥

व्रजवधूनयनं हरिरूपत-
श्चलति नैव, गुरावपि पश्यति ।
रहसि मान्यजनेऽपि विनिन्दति
निजजनेऽपि विखिद्यति सन्ततम् १२१

पश्यतीत्यादयः शत्रन्ताः ॥ २२१ ॥

नीलांशुकान्तः पातिनो राधानेत्रयो र्निजे व्यापारमा-

कलय्य कृष्णस्तदीय नयने वर्णयति—

नीलावगुण्ठान्तरगन्तृनेत्रे
मल्लोचनाभ्यां सह मीलनाय ।
चाञ्चल्यमाप्ते , यमुनाजलान्त-
र्मीनौ विचिक्रीड़तु रम्बुजाभ्याम् १२२

अवगुण्ठः, मुखावरणवसनम् । यमुनाजलान्तर्मीनौ नीलावगुण्ठान्तरगन्तृनेत्रे अम्बुजाभ्यां मल्लोचनाभ्यां सह मीलनाय चाञ्चल्यमाप्ते विचिक्रीड़तु रित्यन्वयः । सावयव रूपकमलङ्कारः ॥ १२२ ॥

तव हृदा नयनं हरिणा हृतं ,
किमनुरागवशेन वरानने ! ।
यदिह पश्यसि नैव पुरस्थितान्
गुरुजनानपि, नैव च लज्जसे ॥१२३॥

हृदा, मनसासह । विनापिसहेत्यस्य योगं तृतीयाया आनुशासनिकत्वात् । गुरुजनानपीति । पुरस्थितानन्यांश्चेन्न पश्यसि वरं मापश्य , गुरुजनानपि तथाभूतान् नपश्यसीत्यर्थः । हृदोहरणे लज्जाया, नयनस्य च हरणे हृ-

ष्टे, रभावः संजात इति भावः ॥ १२३ ॥

त्रिदेशगतः कृष्णो राधाया नयने निरूपयति—

यातास्म्यहं प्रातरिदं निशम्य
निश्श्वस्य निश्श्वस्य भृशं रुदत्याः ।
धृत्वा पदे मां विनिवारयन्त्या
अस्रेण पूर्णे नयने स्मरामि ॥१२४

यातास्म्यहमित्यत्र पुनरुक्तवदाभासोऽलङ्कारः अस्मी-त्यस्याव्ययस्याहमित्यर्थकत्वात् । यातास्मीतिलुङि रूपमि-ति पौनरुक्त्यपरीहारः ॥१२४॥

पतति यत्र रमे ! तव लोचनं
किमपि तेन न दुःख मवाप्यते ।
इति मृषा, भवतीक्षणगोचरं
यदयि! पञ्चशरोऽज्वरयद्धरिम् ॥१२५॥

रमेइति लक्ष्मीसादृश्यात्सम्बोधनमौपचारिकम् । ईक्षण-गोचरं, नयनविषयम् । पञ्चशरः, कामः । अज्वरयत्, सं-न्तापयत् ॥ १२५ ॥

याताऽस्म्यहं प्रातरिदं निशम्य
प्राणैर्विहीनत्वमिवागतायाः ।
सम्बोधितायाअपि हृद्यवाक्यै
श्चेष्टाऽतिशून्ये नयने स्मरामि ॥ १२६

इवेति आगताया इत्यनेनान्वेति । हृद्यं, प्रियम् ॥१२६॥

सखि ! सुधाब्धितरङ्गितलोचनं
पतति यत्र, न तस्य विमूर्च्छनम् ।
इति मृषा, तवलोचन पातवान्
सपदि मूर्च्छति कंसरिपु र्यतः ॥ १२७॥

तरङ्गितं, तरङ्गसङ्गतम् । तारकादित्वादितच् प्रत्ययः १२७

कविः प्रोष्यत्पतिकायाराधाया वृत्तं प्रतिपादयति--

आलिङ्गनेनातिनिपीड़िताया
वाष्पेण पूर्णे नयने मृगाक्ष्याः ।
आकर्णयन्त्याः प्रिययानवाक्यं
कान्त्या विहीने विरहानलेन ॥१२८॥

थालवाक्यं, गमनबोधकं वाक्यम् । हेतुज्ञानजन्यस्य कार्योदयस्योक्तत्वाच्चपलातिशयोक्त्यलङ्कारः ॥ १२८

रात्रिसुरतमपलपन्तीं राधां प्रति सखी वदति--

अपहृताञ्जनपङ्कजगञ्जनं
प्रियतमाधररागसुरञ्जितम् ।
विलसितं निशि जागरमन्थरं
हरति मे हृदयं नयनं तव ॥ १२९॥

अपहृताञ्जनम्, अपहृतं चुम्बनादिनाऽञ्जनं यस्येति तत् । पङ्कजगञ्जनमिति शोभातिशयात् ॥ १२९ ॥

वृध्वालिमालां वृतिरन्ध्रमार्गै
रालोकयन्तीमतिकौतुकेन ।
अङ्के स्थिताया अतिमन्थराया
नेत्रे सलज्जे चकिते स्मरामि॥१३०॥

आलिमालां, सखीपरम्पराम् । वृतिरन्ध्रमार्गैः, आवरणभूतभित्तिकादि विवरमार्गैः ॥ १३० ॥

कृष्णो राधां प्रत्याह--

हरति मे हृदयं तव लोचनं
मदनशास्त्रमिवातिविराजितम् ।
विविधभोगवशीकरणोदयो-
त्तमगतिस्फुटबन्धरसान्वितम् ॥१३१॥

विविधेत्यादि । विविधो भोगवशीकरणयोरुदयो यस्मा-त् तथाभूतम्, उत्तमा गतिर्गमनं ज्ञानं वा यस्य तादृशम्, स्फुटोबन्धो बन्धनं सुरतासनविशेषो वा यस्मात्तथाभूतम्, रसैरन्वितम् ॥ १३१ ॥

जाग्रत्सु सर्वेषु समुत्थितेषु,
केलीगृहान्मातृगृहं व्रजन्त्याः ।
विस्रस्तवस्त्राभरणाङ्किताया
अद्यापि नेत्रे तरले स्मरामि ॥ १३२॥

विस्रस्तेत्यादि बहुव्रीहिः । तरले इत्यनेन त्रपातिश-यो द्योत्यते ॥ १३२ ॥

कृष्णां गाथामभिदधाति--

परमपुण्यफलं मयि जन्मनो

हसतु पाणिनिशास्त्रमिवेक्षणम् ।
तव सुसन्धिसमागमसाधना-
गतिसमासगुणोदयभूषितम् ॥१३३॥

सुसन्धीत्यादि । शोभनः सन्धिः स्वसंस्थानविशेषः, अच्सन्धिप्रभृति र्वा यत्र तत् । समागमस्य साधनम् उपा-य आगतिसमास आगमनसंश्लेषः संश्लिष्टागतिः "ख्रद्भि-हितोभावोद्रव्यवत्प्रकाशत" इतिन्यायात्, कटाक्ष इति या-वत् यस्येति तत् । गुणोदयेन गुणानामुदयेन सुभूषितं, परत्र समागमसाधनागतिसमासगुणानां, नुडाद्यागम-प्रयोगसाधनगतिसंज्ञाऽव्ययीभावादिसमासादादिगुणानामुद-येन प्रकाशेन भूषितमित्यर्थः ॥ १३३ ॥

वालग्रहस्यैकमिषात्कराभ्यां
संस्पृष्टवक्षोजयुगान्तिकायाः ।
वक्रे प्रकुप्ते चपले सरागे
मत्ते सहासे नयने स्मरामि ॥१३४॥

वालग्रहस्य, केशग्रहणस्य। एकमिषात्, एकव्याजात् १३४

मयि ददातु मुदं तवलोचनं

सुतनु ! गौतमशास्त्रमिवाधुना ।
विविधभावगुणोपमितिस्फुटा-
नुमितपक्षसहेतुकमुच्चकैः ॥ १३५ ॥

गौतमशास्त्रं, न्यायशास्त्रम् । विविधेत्यादि, विविधाः भावगुणोपमितयः चेष्टा सौन्दर्यं सादृश्यानि द्रव्यादिभाव-रूपादिगुणसंज्ञासंज्ञिसम्बन्धप्रतिपत्तिविशेषा वा स्फुटा यस्मिन्निति तत् । यद्वा तैः स्फुटम् । अनुमितः पक्षः, उद्देश्यः साध्यवान् वा यतो यत्र वेति तत् । सह हेतुना कारणेन ज्ञापकेनवेति तत् । सादृश्यं च सारसादि सापेक्षम्, राधाया उद्देश्यो नायको नयनव्यापारेणानुमीयते, नयनं कारणीभूतं प्रणयमन्तरेण न प्रवर्तते, इति भावः ॥ १३५ ॥

प्राणप्रियस्ते समुपागतोऽत्र
श्रुत्वाऽऽलिवक्त्रादतिकम्पितायाः ।
लोले विभीते चकिते विखिन्ने
मन्दे सलज्जे नयने स्मरामि ॥१३६॥

अतिकम्पितत्वादि मुग्धत्वात् । गुणक्रिययोर्यौगपद्येनप्रतिपादनात्समुच्चयालङ्कारः ॥ १३६ ॥

सङ्केतसमयबोधिकां कृष्णे राधाया लोचनचेष्टाचमत्कृतिमवचित्य सखी तां प्रत्याचष्टे—

प्रियतमे ! तव लोचन मुञ्चकैः
गणकशास्त्रमिव प्रविराजते ।
यदिह शिक्षयति स्फुटमागतौ
मुररिपुं प्रति कालविवेचनम् ॥१३७॥

गणकशास्त्रं, ज्यौतिषशास्त्रम् । आगतौ, सङ्केतस्थानं प्रत्यागमने, विवेचनं, विवेकम् । गणकशास्त्रेणापि कालो विवेचित इति ॥ १३७ ॥

आलीभिराहृत्य प्रतार्य वाक्यै-
स्सम्प्रापिताया निकटं मदीयम् ।
ज्ञात्वा प्रपञ्चं हृदि कम्पिताया
नेत्रे रुषा रक्ततरे स्मरामि ॥ १३८ ॥

स्फुटम् ॥ १३८ ॥

सखी राधामाह—

पतति यत्र प्रिये ! तत्र लोचनं

भवति धन्यतमोऽद्य स एव, यत् ।
स्वजननीगुरुबन्धुजनोज्झितोऽ-
पि रसिकै रस हृदा परिशस्यते ॥१३६॥

अपीत्यनेन तादृशे प्रशंसाविषयत्वमापाद्यते । स, कृष्णः । परिशस्यते, प्रशस्यते ॥ १३६ ॥

कविः कृष्णविषयिणीं राधास्थितां प्रीतिं वर्णयति—

प्राणप्रियस्ते समुपैति दूरा-
दित्येतदाकर्ण्य प्रहर्षितायाः ।
उड्डीय यातुं मिलनाय नेत्रे
कान्तेन साकं किमु चञ्चले स्तः १४०

कान्तेन साकं मिलनायेति सम्बन्धः । उत्प्रेक्षा ॥१४०॥

प्रियतमे ! तव लोचनमात्मभू-
नृपति-चार-(सैन्य)-जनेन समो यतः ।
हरिमनोविपिनान्तरगोपिता-
नपि बबन्ध विवेकमुखानरीन् ॥१४१॥

आत्मभूः, मदनः । हरिमनोविपिनान्तरगोपितान्,

कृष्णास्तनःस्वरवनमध्ये गोपितान्, विवेकमुख्यान्, विवेकप्रभृतीन् ॥ १४१ ॥

आगतपतिकाया राधाया वृत्तं कविरुत्प्रेक्षया वदति—

दूरागतं प्राणपतिं विलोक्य
नीराणि संत्यजतु स्सुनेत्रे ।
पाद्यादिभिः पूजयितुं प्रियं किं
प्रेम्णा सयत्ने विबभूवतु स्ते १४२

स्फुटम् ॥ १४२ ॥

प्रियतमे ! तव लोचनमुल्वणं
सखि ! पुरातनपन्नगकण्टकम् ।
विशति यत्र प्रिये, न कदापि तं
त्यजति, कापि यतो भवति व्यथा १४३

पन्नगः, सर्पः । कापि, अनिर्वचनीया, अनुभवैक मात्रवेद्या । प्राचीन सर्पकण्टकस्यवेधेनातितमां वेदना जायते, नवा स निस्सरतीतिवस्तुस्थितिः ॥ १४३ ॥

राधाया विलोकनेनातिप्रमुदितः कृष्णस्तां ब्रूते —

ददत्सुधावारिधिकोटिवीचीः
पराध्यसौधाब्धितरङ्गपूर्णम् ।
कियत्सुधाभिर्निरमायि नेत्रं
तव प्रिये ! विश्वसृजा न जाने॥१४४

पराध्यसौधाब्धिः, प्रधानामृतसमुद्रः । विश्वसृजा, ब्रह्मणा ॥ १४४ ॥

कनकसुन्दरि ! तावक लोचनं
बुधवचोऽविषयः स्मरमार्गणः ।
पतति यत्र, सुखेन स गच्छति,
भजति चान्यजनोऽति मनोव्रणम् १४५

स्फुटम् ॥ १४५ ॥

राधया दृशाऽवलोकनेन खेदमनुभवन् कृष्णस्तामभिदधाति—

काभिस्सुधाभिर्निरमायि नेत्रं
तव प्रिये ! विश्वसृजा न जाने ।
यद्दर्शनेनाऽपि मनोजवह्निं
समेधयत्तापयति प्रियं माम् ॥१४६॥

यत्, नयनम् । इदंचकर्तृ पदम् । समेधयत्, प्रवर्धयत् १४६

प्रियतमे ! तव लोचनमुद्भटो
मदनभूपतिमल्लवरो यतः ।
हरिकुलव्रततावलि तन्मनो
दृषदि पोथयतिस्म हठेन तत्॥१४७॥

उद्भटोऽतिबलवान् । हरीत्यादि । हरेः कुलव्रततया कुलव्रतेन, बलि, बलवदित्यर्थः, पक्षधर्मतेत्यत्रेव तलः स्वार्थिकत्वात्, तत्र तस्य पक्षताप्रकाशे प्रतिपादितत्वात् । दृषदि, प्रस्तरे । पोथयतिस्म निहतवान् ॥ १४७ ॥

राधिकायास्सखी अपरां सखीमाह—

संगोपितं यद्यपि लोकमध्ये
नीलावगुण्ठेन विलम्बितेन ।
वेगाद्बहिर्भूय तथापि रागात्
कृष्णेन सम्मीलति नेत्रमस्याः॥१४८॥

विलम्बितेन, विशेषतोलम्बितेन ॥ १४८ ॥

संगोपितं यद्यपि लोकमध्ये

दीर्घावगुण्ठेन सुनेत्र मस्याः ।
मां द्रष्टुकामस्य तथापि तस्य
बहिर्भवद्भाति सुचाकचिक्यम् १४६

स्फुटम् ॥ १४६ ॥

कृष्णो राधायाः प्रथमसमागमं व्यपदिशति—

आलिङ्गनेनातिनिपीड़िताया
आलीभयान्मौनमुखं रुद्दत्याः ।
मुक्तानुरूपाश्रुकणा दधाने
अद्यापि तस्या नयने स्मरामि १५०

मुक्तानुरूपाः, मौक्तिकसदृशाः ॥ १५० ॥

सुरतसामयिकं राधाया नयनं कविरुत्प्रेक्षया वर्णयति-

आलिङ्गनोन्मत्तमनोजदीप्ते
प्रव्यक्तरागे कृतभूरिकम्पे ।
जेतुं त्रिलोकीं किमु यौवनस्य
भातः पताके नयने मृगाक्ष्याः १५१

पूर्वार्द्धस्थित विशेषणत्रयं नयने पताकया सम्भाव्यमा-

तत्प्रसूनोपमानकम्। दीप्ते, काशिते। भूरि, प्रभूतम्। स्मर पताकायाः प्रकाशितस्य लौहित्य कल्पितत्व त्रिय इति बोध्यम् ॥ १५१ ॥

प्रोषितभर्तृकाया राधाया दशां कविः प्रतिपादयति—

सम्प्रोषितप्राणपतेर्वियोगात्
शिष्टास्थिमात्रस्य प्रियाजनस्य।
नाथागमाकर्णनमोदितस्य
नेत्रे सचेष्टे वदतोऽसुवार्ताम् ॥१५२॥

शिष्टम्, अवशिष्टम्। असुवार्ताम्, प्राणप्रवृत्तिम्। वदतो ऽनुमापयतः ॥ १५२ ॥

दूरागतं प्राणपतिं दिदृक्षु
गुर्वादिभीत्याऽति सलज्जमाशु।
दीर्घावगुण्ठान्तरतस्तथापि
प्रेयांस मापश्यति नेत्रमस्याः ॥१५३॥

प्रेयांसम्, अतिशयेन प्रियम्। आश्विति क्रियान्वयि १५३

कृष्णः स्वगतां राधाया नयनव्यापृतिं वर्णयति—

साधं सखीभिः पुरतो व्रजन्त्या
व्याजेन केनाप्यपुरोगतायाः ।
आकुञ्चितामोदचितं विभीतं
साचिस्मितं मामभि नेत्रमस्याः १५४

अपुरः, पश्चात् । चितं, व्याप्तम् । विभीतमिति, सखीभ्यो भयेनान्वितमित्यर्थः । साचिस्मितं, तिर्यक् विकसितम्, "स्मितमिह विकाशिनयनमि" ति दशरूपकोक्तेः । अभि, लक्ष्यीकृत्य । लज्जा प्रेमातिशयव्यक्तिः ॥ १५४ ॥

"कथमिवाकस्मात् राधाकृष्णयोर्नयनयोरन्योन्यं रागस्संजात" इति पृष्टवतीं सखीं राधाया स्सखी निवेदयति—

आदाय कश्चिद्रसमीशनेत्रात्-
दत्वा रसं स्वं कमपीह तस्मै ।
कृष्णेक्षणेनैव समं मृगाक्ष्याः
चक्षुर्विधत्ते सखि ! सख्यभावम् ॥ १५५ ॥

ईशनेत्रात्, कृष्णनेत्रात् । स्वं, स्वकीयम्, अपीत्यत्राप्यन्वेति । तस्मै, ईशाय । मैत्रीविधानात् पूर्वं योषितः परस्परं मधुराद्यास्वाद्यवस्तुप्रदानं कुर्वन्तीत्याचारः । परि-

वृत्त्यलंकारः "परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः, इति काव्यप्रकाशाभिधानात् ॥ १५५ ॥

खलनिन्दामुपश्रुत्यापि सतो राधाकृष्णयोः प्रीतिः कुतो-नापचीयत इत्यनुयोगं कृतवतीं सखीं प्रति तस्यास्सखी कथयति—

यथा यथा प्रेमसुकल्पवल्या
मूलं खनत्यालि ! खलो वराहः ।
रसेन केनापि तथा तथेदं
दार्ढ्यं नयत्येव सुनेत्रमस्याः ॥१५६॥

प्रेमसुकल्पवल्याः, प्रीत्यात्मिकायाश्शोभनकल्पलतिकायाः । रसेन, भेषजेन, केनापि, लोकोत्तरेण । इदं, मूलम् । नयते र्द्विकर्मकत्वात् ॥ १५६ ॥

यथा यथा प्रेमतरुं तदीयं
खलाः प्रपञ्चज्वलनैर्दहन्ति ।
तथा तथा तं हरितं करोति
रसैस्तुकैश्चिन्नयनं मृगाद्याः १५७

प्रपञ्चज्वलनैः, प्रयासविशेषात्मकैरनलैः । हरितं, ह-

रिद्धर्णकम् ॥ १५७ ॥

राधाया नयनसौन्दर्यं कविर्निर्दिशति—

नभस्वता कम्पितसारसं सरः
स्नातुं श्रिताया वृषभानुजायाः ।
नेत्रं विलासैरपि काशितं हरिः
विपश्चिदग्र्योऽपि न निश्चिकाय १५८

नभस्वता, वायुना । सारसं, कमलम् । सर इत्यत्रश्र-
यणक्रियाकर्मत्वबोधिका द्वितीया । स्नाने तदधिकरणकत्वं
चार्थतो लभ्यम् । निश्चिकाय, निश्चितवान् । नेत्रत्वेनेत्या-
शयः । सामान्यालङ्कारः, " सामान्यं, यदि सादृश्याद्विशे-
षो नोपलभ्यते " इति दीक्षितस्य लक्षणात् ॥ १५८ ॥

प्रातः प्रयाताऽहमिदं मुरारे-
र्वचो निशम्यासुकमात्रशिष्टे ।
सद्योऽपतद् दृष्टिरनङ्गखिन्ने
देहे स्वकीये बहुलाश्रुपूर्णा ॥१५९॥

असुकाः, अनुकम्पनीयप्राणाः, अनुकम्पायां कन् ।
ऽपतदिति, तथाच श्रुत्वैव रमैषा दृशेति तदया न गन्तव्यमि-

ति द्दृष्टिप ।तनेन प्रतीयते ॥ १५९ ॥

प्रवासादागतमात्रस्य कृष्णस्य विषये राधाया वृत्तं कवि-र्वदति —

दूरागतं प्राणपतिं निशम्य
व्याजेन केनापि पुरोगतायाः ।
संम्लानिमत्या सपदि स्फुरन्त्या
दृष्ट्या कृतार्थीकृत एव कृष्णः १६०

संम्लानिमत्या, सम्यक्म्लानया । " हाम्लाग्लाभ्यः कृयर्थे निः " इत्यभिधानात् । विरोधाभासालङ्कारः म्लानिस्फुरणयोर्विरोधस्यापाततः प्रतीयमानस्य क्षणभेदेन परीहारात् ॥ १६० ॥

कृष्णो मुग्धराधासुरतं निरूपयति—

वृध्वालिवर्गं वृतिगूढमार्गै
रालोकयन्तं हृदये स्थितायाः ।
सम्मोचयन्त्या मम पाणियुग्मं
लज्जाम्बुधौ पेततुरेव नेत्रे ॥१६१॥

हृदये ; वक्षसि । ममेत्यत्राप्यन्वेति । पाणियुग्ममिति ।

शृङ्खलारूपंतद्वसेयम् । सम्मोचयन्त्या, नतु सम्मोचित-वत्याः ॥ १६१ ॥

गच्छेति सखीभिरनुज्ञाते कृष्णे सति राधाया आचरणं तदीयप्रीतिप्रतीतये कविराचष्टे—

गच्छेति कान्ते वचनं सखीनां
श्रुत्वाऽऽकुलाया हृदि कम्पितायाः ।
धृत्वालिपादौ प्रतिषेधयन्त्या
नेत्रे विखिन्ने चकिते चले स्तः ॥१६२॥

कान्ते, कृष्णे । हृदि, वक्षसि । अवच्छेदकत्वं सप्तम्यर्थः । प्रतिषेधयन्त्या इति, एतस्य गच्छेतिवचनं कर्म बोध्यम् ॥ १६२ ॥

शिशिरे राधया वियुक्तः कृष्णो ब्रूते—

तन्नेत्रसादृश्यविनोदमात्र-
मप्यत्र धाता सहते न मेऽद्य ।
पद्मं तुषारै र्निहतं समस्तं
हा ! खञ्जरीटा अपि नो चिरस्थाः १६३

तदिति, तस्या राधाया इत्यर्थः । विनोदो, दर्शनम् । चिर-

स्था इति, शय्येव तेषां सद्भावादितिभावः। इह प्रतीपाल-ङ्कारोव्यङ्ग्यो वाच्यो वेति चिन्तनीयम् ॥ १६२ ॥

कृष्णे प्रोषिते राधाया निमेषशून्यं चेष्टारहितं च नयनं कविरुत्प्रेक्षते--

> साधं गताया इव चित्रितायाः
> सम्प्रस्थितेनात्मप्रियेण नेत्रे।
> कुत्रापि गत्वा प्रविलोकयन्त्याः
> शून्ये निमेषेण विचेष्टिते स्तः ॥१६४॥

सार्धमिति प्रियेण वेति। विलोकयन्त्या इति, वर्तमानसामीप्यार्थकस्य लटः स्थाने शतृप्रत्ययः। विचेष्टिते, चेष्टया रहिते ॥ १६४ ॥

> हस्ते धृताया, ननन्नेत्युदीय
> यातुं परावृत्य मुहुर्लषन्त्याः।
> वक्रं बहिः, स्नेहरसार्द्रशोभ
> मालिङ्गनेच्छां नयनं व्यनक्ति ॥१६५॥

परावृत्य यातुं लषन्त्या इति सम्बन्धः। स्नेहरसार्द्रा शोभा यस्य तत्तथाभूतम् ॥ १६५ ॥

प्रावृषेण्यं वियुक्तराधाया वृत्तं कविः प्रतिपादयति--

पयोदमालोक्य हरिं स्मरन्त्याः,
प्रकम्पिताया, अतिमूर्च्छितायाः।
भूमौ स्थिताया, जड़तां गतायाः
शून्ये निमेषै, नयने स्त, एव ॥ १६६॥

स्मरन्त्या इति। तथाच स्मृत्यलङ्कारः "सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते" इति दर्पणाभिधानात्। जड़ताम्, अप्रतिपत्तिम्। "अप्रतिपत्तिर्जड़ता" इति हि दशरूपकम् ॥ १६६ ॥

ननान्दुर्वचनैः कृष्णायौदनादिभोजनीयमर्पयन्तीं राधां कविर्वर्णयति--

पक्त्वौदनं व्यञ्जनमात्मबन्धवे
भोक्तुं ददत्या स्वननान्दवाक्यैः।
वक्रीकृतभ्रीवमसंमुखं तरां
नेत्रं विधत्ते सुषमामपूर्वाम् ॥ १६७॥

ओदनं, तन्निष्पादकतण्डुलम्, मुख्यार्थबाधेन लक्षणाया आवश्यकत्वात्। नच चकारानुक्त्या क्षतिः, "अहरह नं-

यमानो गामश्वं पुरुषं पशु " मित्यादौ तेन विनापि समुच्च-
यस्य प्रतीतेः । आत्मबन्धवे, कृष्णाय ॥ वक्रीकृतग्रीवेत्या-
दिना लज्जातिशयो ध्वन्यते । तराम्, नितराम्, एतच्च क्रि-
यान्वयि बोध्यम् ॥ १६७ ॥

गौरीपूजनाय सखीप्रभृतिभिः सार्धं गतवत्या राधा-
याः कृष्णेऽनुरागं कविः कथयति—

आर्यासपर्यार्थमुपागताया
मध्ये वधूनां तु करे धृतायाः ।
सख्या प्रिये दापितवीटिकायाः
सम्पात्यधो नेत्रमतीव भाति ॥१६८॥

आर्यासपर्यार्थं, पार्वतीपूजनाय । दापिता वीटिका ता-
म्बूलवीटिका, ययेति तथाभूतायाः. प्रिये, कृष्णे । अधः सम्पाती-
त्यनेन लज्जाव्यज्यमाना कृष्णविषयिणी रतिं पोष्यति ॥१६८

परिणयानन्तरं माचारानुबन्धिने स्वस्य नीराजनाय स-
खीभि स्साकमङ्गणे मण्डपनिकेतनस्थितये व्रजन्तीं कृष्ण
स्स्पृष्टकनिष्ठिकाङ्गुलिं राधां कवि र्वर्णयति—

नीराजनायाजिर आलिमध्ये
मन्दं चलन्त्याः स्मितशोभिमुख्याः ।

प्रेयः करस्पृष्टकनिष्ठिकाया-

श्चेतो हरत्येव सलज्जनेत्रम् ॥१६९॥

अजिरे, अङ्गणे ॥ १६९ ॥

नीवीविमुक्तिं मयि कुर्वतीशे

ह्रीनम्र, मन्तः प्रणयप्रकाशि ।

मिथ्याऽस्थराल्म्रु , बहिः प्रकुप्त-

मद्यापि तस्या नयनं स्मरामि ॥१७०॥

नीवी, वस्त्रग्रन्थिर्मध्यदेशवर्तिनीति । अरालं, कुटिलम् प्र-

कुप्तमितिपदं चिन्तनीयं सर्वत्र ॥ १७० ॥

राधयाऽवलोकितस्य कृष्णस्य विवेकलज्जालोकबाह्य-

ताः कविस्समर्थयति –

क्षिप्रं हरत्येव विवेकलक्ष्मीं ,

त्रपां नयत्येव तलं रसायाः ।

लोकात्करोत्येव पृथक् सरागं

किं किं न नेत्रं कुरुते तदीयम् ॥१७१

क्षिप्रं , शीघ्रम् । रसायास्तलं , पातालम् । सरागमि-

ति नेत्रविशेषणम् ॥ १७१ ॥

कृष्णो राधां नयनप्रसादमर्थयते--

तिक्तायतेऽद्धा सततं सुधाऽपि
दासीयते प्रेयसि मोक्षलक्ष्मीः ।
पद्मादिकं के गणयन्तु मुग्धा
नेत्रे त्वदीये मयि सुप्रसन्ने ॥१७२॥

अद्धा, सत्यम् । प्रेयसीति नेत्रास्मदर्थयोरुभयत्रान्वे-
[illegible] । मुग्धा, [illegible] । [illegible] सुधादिप्रतियोगिको
[illegible] ॥१७२॥

[illegible] रीतापमभिधत्ते

मानं वहन्त्या [illegible]
रेखां लिखन्त्या नखरेण भूमौ ।
बाष्पेण पूर्णं नयनं प्रकुर्व-
मयापि तन्मे हृदयं दुनोति ॥१७३॥

नखरेण, नखेन । दुनोति, परितापयति ॥ १७३ ॥

आकुञ्चितभ्रु, प्रविकाशितान्तं
सुव्यक्तरागं, प्रणयाभिरामम् ।

सस्मेरनिष्पन्दविकारि, नेत्रं
कं भाग्यवन्तं कुरुते कृतार्थम् ॥१७४॥

प्रविकाशितान्तं, प्रविकाशितोऽन्तो यस्येति तत्, कृत कटाक्षमितियावत् । यद्वा प्रविकाशीतिच्छेदः । तान्तं, सालस्यम् । अभिरामं, रुचिरम् । सस्मेरेत्यादि सस्मेरं निष्क्रियम् विकारकारिचेत्यर्थः ॥ १७४ ॥

उद्बाहुसन्दर्शितकक्षनाभि
जृम्भाचितास्यं परिमोटिताङ्गम् ।
आलोकयन्त्याः कुटिलभ्रु किञ्चि-
दाकुञ्चितान्तं नयनं स्मरामि ॥१७५॥

उदित्यादि, उन्नामितेन बाहुना सन्दर्शिते कक्षनाभी यत्र तथाभूतम् । चितं, व्याप्तम् । परिमोटितं, परितः सङ्कोचितम् मोट्टायितमलङ्कारः, "मोट्टायितमिति प्राहुः कर्णकण्डूयनादिक" मितिदर्पणोक्तेः ॥ १७५ ॥

बालाया अपि राधाया दशामवालोक्य जातानुरागः कृष्णो वदति—

नेत्रं न वक्रं, न विलासि कासैः

न भ्रू विकारि, प्रियकारि नैतत् ।
तथापि सर्वं प्रवणीकरोति
किं वा करिष्यत्यचिरान्न जाने ॥१७६॥

एतदिति, नेत्रमित्यनेन संबध्यते। प्रवणीकरोति, वशीकरोति। सौन्दर्य्यातिशयोऽध्वन्यते ॥१७६॥

कृष्णो मानवतीं राधां प्रत्याह--

उन्मीलयाक्षि, प्रियकारिणि! स्वं
तिक्तायतामाशु सुधापि, पद्मम् ।
मानं निरस्यत्वथ खञ्जरीटः
स्वात्मानमारक्षतु काननेषु ॥१७७॥

स्वं, स्वकीयम्. अक्षि, नेत्रम्, उन्मीलय, प्रकाशय। मानम्, अभिमानम्। निरस्यतु, निराकरोतु। एकत्र-वनेयदिरक्षणं नभवेदात्मनस्तदा वनान्तरं तेन गन्तव्यमिति द्योतनाय काननेष्विति बहुवचनम्। मानो न विधेय इति ध्वन्यते। अतएव प्रियकारिणीति सम्बोधनम् ॥१७७॥

आघूर्णिते राज्यतिजागरेण
मुद्रामवाप्तेऽर्धविकाशिते च ।

प्रबोधितायाः मयका विभाते
नाद्यापि नेत्रे विजहाति चेतः ॥१७८॥

मुद्रां, निमीलनम्। प्रबोधितायाः, उत्थापितायाः। मयका, मया ॥ १७८ ॥

कृष्णेन हठाद्रथ्यामालिङ्गितां राधां कविर्वर्णयति—

धृत्वा भुजाभ्यामतिगाढमुच्चै
रालिङ्गनेनातिनिपीडिताङ्ग्याः।
रोषेण रक्ते बहुलास्य सक्ते
नेत्रे विधत्तः परमं प्रमोदम् ॥१७९॥

सक्ते, युक्ते ॥ १७९ ॥

सख्या स्वतनु मुद्वर्तयन्त्यां राधायां कृष्णेऽकस्मात्समागते तस्या स्त्रपातिशयं कविः प्रतिपादयति—

उद्वर्तयन्त्या निजदेहमाल्याऽ
कस्मादुपेते मयि, प्रोत्थितायाः।
नेत्रे स्मिते संकुचिते च भीते
प्रीते मुदा साधुरसे अभूताम् ॥१८०॥

सङ्कुचिते इत्यनेन लज्जातिशयो व्यज्यते । भीते इति, यदि कश्चिदेवं पश्येत् तदा प्रणयं विजानीयादिति भीत्येत्यर्थः । श्रीते, श्रियं, शं भामिते गते ॥ १८० ॥

सम्मोचयन्त्या मम पाणियुग्मं
संस्पृष्टवक्षोजयुगं रमण्याः ।
अन्तः प्रमोदातिविकाशि, वक्त्रं
बाह्यातिकोपान्नयनं स्मरामि॥१८१॥

संस्पृष्टं वक्षोजयुगं येन तदितिपाणियुग्ममित्यस्य विशेषणम् ॥ १८१ ॥

सङ्कीर्णमार्गेण मुदा चलन्त्या
आगच्छतो मे हृदये मिलन्त्याः ।
सस्मेरमुख्यास्सरसे, सहासे,
सप्रेमणी, ते, नयने स्मरामि ॥१८२॥

मार्गे संकीर्णत्वं हृदयमिलने हेतुः । ते, अनुभूते ॥१८२॥

नेतुं जलं मे गृहमागताया
व्याजेन केनापि करे धृतायाः ।

कां कां न चेष्टां तनुतस्तदक्षि-
त्रैलोक्यलक्ष्मीविजयैकभूमिम् ॥१८३॥

तनुतः, कुरुतः ॥ १८३ ॥

कर्णान्तिकं गच्छति नो मनोज्ञं
नो खञ्जरीटस्य गतिं विधत्ते ।
नो वक्रतासंवलितं मृगाक्ष्या
नेत्रं, तथाप्यस्य मनो दुनोति ॥१८४॥

विभावनालङ्कारः कर्णान्तिकगमनादेः कारणीभूतस्य विरहेऽपि मनःपरितापरूपस्य कार्यस्योद्भवात् । खञ्जरीटगमनविधानकर्तृत्वस्य स्वस्मिन्नसम्बन्धात् तद्गमनसदृशगमनकर्तृत्वे च पर्यवसानेन निदर्शनालङ्कारश्च ॥ १८४॥

विप्रलम्भे मात्रादिभिस्सहसा प्रसाधितां राधां कविर्वर्णयति--

बाह्यं दधत्या अपि चाकचिक्यं
सम्भूषिताङ्ग्या अपि राधिकायाः
प्रेयोवियोगाधिमहो ब्रुवाते
पूर्वश्रियाहीनतमे तु नेत्रे ॥१८५॥

वियोगाग्निम्, वियोगजन्यां मनोवेदनाम्। ब्रु वाते, कथयतः। तुरवधारणे ॥ १८५ ॥

कृष्णो निजां राधया सङ्गमस्योत्कण्ठामावेदयति—

कन्दर्पलीलैकनिदानभूतं
त्रैलोक्यसौन्दर्यनिकेतनं च।
मनोरथानां मम साधकं त-
न्नेत्रं कदा स्याद् वृषभानुजायाः॥१८६॥

निदानम्, आदिकारणम्। ममेति मनोरथान्वयि ॥१८६॥

कुञ्जे गताया वृषभानुजायाः
साकं मया कौतुकमाद्धत्याः।
दृष्ट्वालिमालां चकितेच भीते
शुष्के विखिन्ने नयने स्मरामि॥१८७॥

स्फुटम् ॥ १८७ ॥

तत् खञ्जरीटस्य गतिं तनोति
नेत्रं, सरोजश्रियमाचिनोति।
मीनाभिमानं विधुनोति वा मे

मनो दुनोत्येव हिमांशुमुख्याः॥१८८॥

तदिति नेत्रमन्वयते। विधुनोति, निरस्यति। चेति समुच्चये ॥ १८८ ॥

मौग्ध्ये विश्लेषवेदनापलपनाय गृहीतशृङ्गारवेषां राधां कविर्वर्णयति—

उद्वर्तिताङ्ग्या अपि भूषितायाः
ताम्बूलकान्ताधरपल्लवायाः।
अप्यञ्जिते अञ्जनकेन नेत्रे
त्यक्तश्रिणी हा! विरहं ब्रुवाते॥१८९॥

त्यक्तश्रिणी, त्यक्ता श्रीर्याभ्यां ते ॥१८९॥

सखी कज्जलेन लोचनं प्रसाधयन्तीं राधामभिदधाति—

[illegible] याचे सखि! नेत्रयोस्त्वं
[illegible] कज्जलं धेहि शलाकयाद्य।
[illegible] [illegible]पातयतो हि शुद्धे
ते कज्जलैः किं कुरुतो न जाने॥१९०॥

इति, वक्ष्यमाणम्, धेहि, निधेहि। हि, यतः। पादे,

चरणे। जगत्, सकलम्। कुरुतः, करिष्यतः, वर्त्तमान सामीप्ये लट्॥ १६० ॥

मा कज्जलं साधु शलाकया त्वं
नेत्रद्वये धेहि जगद्विघातिनि।
त्रैलोक्यसम्भेदसमर्थशक्तौ
तीक्ष्णे पृषत्के विषपातनेन किम्॥१६१॥

त्रैलोक्येत्यादि। त्रैलोक्यस्य संभेदने समर्था शक्तिर्यस्य तथा भूते इत्यर्थः। पृषत्के, शरे। दृष्टान्तालङ्कारः बिम्ब प्रतिबिम्बभावापन्नयोर्वाक्यार्थसाधारणधर्मयोस्सद्भावात्॥ १६१ ॥

मानिनीं राधां प्रति सखी वदति—

नेत्रं न वक्रं कुरु माधवे त्वं
भ्रूभङ्गमात्रेण यतो वशस्ते।
मूर्ध्ना त्वदीयं पदपद्मयुग्मं
भानो नमत्येष यशो वितन्वन्॥१६२॥

वशइति। माधवे तथात्वमर्थादेवलभ्यते इति न न्यून पदत्वदोषप्रसक्तिः। यशइति, इहापि तदित्यस्य सम्बन्धो

बोध्यः। कृष्णमनेन राधाया यशो वर्धत इत्याशयः।
गुरुमाने पादप्रणामस्य चिह्नितत्वमिति नानौचित्यम् ॥१६२

मानमपलपन्तीं राधां सखी प्रत्याह—

नो वक्रता, नैव विकारिताच,
नो रुक्तता, यद्यपि नेत्रयोस्ते।
अन्तः प्रकोपारुणिमा तथापि
मानं हरौ द्योतयते मृगाक्षि!॥१६३॥

स्फुटम् ॥ १६३ ॥

कृष्णप्रेमाणमपह्नुवानां राधां सखी कथयति—

वक्रत्वमुच्चैररुणत्वमुच्चैः
वक्रे भ्रुवौ यद्यपि नेत्रयोस्ते।
गुप्तं तथाप्यस्य न प्रेम कृष्णे
चैक्षण्यमावेदयति स्फुटं तत् ॥१६४॥

स्फुटम् ॥ १६४ ॥

कुञ्जे त्वया मयाचायातव्यमिति कृष्णेन सह सङ्केतं विधाय तत्र गतवतीं तमागतमनालोक्य खेदातिशयमनुभवन्तीं राधां कवि र्वर्णयति—

दृष्ट्वा निकुञ्जं हरिशून्यमारात्
हा ! शालभञ्जीत्वमुपागतायाः ।
शून्ये निमेषेण विचेष्टितेच
शुष्के विरूपे नयने अभूताम् ॥१६५॥

आरात्, समीपे । शालभञ्जीत्वम्, प्रासादस्थितमानवाकारचित्रतुल्यताम्, उपचारात्। विप्रलब्धा नायिकेयम् ॥१६५

कृष्णस्तेन मार्गे सहसा गृहीतां राधां वर्णयति—

संमोचयन्त्याः सहसा कराब्जं
पश्चाद्व्रजन्त्याः पुरतश्च यान्त्याः ।
वक्रभ्रुवा साधु निवारयन्त्याः
समं मया मीलति नेत्रमस्याः ॥१६६॥

स्फुटम् ॥ १६६ ॥

संत्रासयन्त्याः कुटिलभ्रुवा मां
सन्तर्जयन्त्याः प्रतिषेधवाक्यैः ।
आलिङ्गनं साधुच याचितायाः
साकं मया क्रीड़ति नेत्रमस्याः ॥१६७॥

थाच्चतेरालिङ्गनस्य प्रधानकर्मतया तस्याश्चानुक्तत्वा-त्तदुत्तरं द्वितीया, इदमक्ष्ण गौणकर्मतया तस्याश्चोक्तत्वात् प्रथमा, "गौणेकर्मणि दुह्यादे" रित्याद्यभिधानात् ॥ १६७ ॥

वक्रभ्रु, रूक्षं कुटिलैः कटाक्षैः
कोपारुणं यद्यपि नेत्रमस्याः ।
अन्तर्गतौत्सुक्यविकाशितश्रि
प्रालिङ्गनेच्छां नयनं व्यनक्ति ॥१६८॥

रूक्षं शून्यम् ॥ १६८ ॥

वक्रभ्रु, रूक्षं, कुटिलं, विरुद्धं,
कोपारुणं, यद्यपि नेत्रमस्याः ।
अन्तस्थितप्रीतिविकाशितश्रि
प्रालिङ्गनेच्छां नयनं व्यनक्ति ॥१६९॥

विरुद्ध, प्रतिकूलावलोकनकारि ॥ १६९ ॥

वक्रभ्रु रूक्षं कुटिलं प्रकुप्तं
रुन्दं विरक्तं विषमं विरुद्धम् ।
स्निग्धैः कटाक्षैस्तु तथापि कान्ते

नेत्रं विधत्ते विपरीतभावम् ॥२००॥

विषमं, भीतिजनकम् । कान्ते, कृष्णे । यद्वा सम्बोधनं तत् ॥ २०० ॥

स्निग्धं, स्मितं, साञ्जनरञ्जितत्वं
मुग्धं मनोहारि विकाशिताभम् ।
नेत्रं, तथाप्यद्य हतश्रि, खेद-
मन्तर्गतं वक्ति सुधांशुमुख्याः ॥२०१॥

साञ्जनरञ्जितत्वम्, अञ्जनेन रञ्जितम् ॥ २०१ ॥

मुग्धं मनोहारि सहासमस्याः
स्निग्धं विभासं प्रणयाभिरामम् ।
सस्पन्दमावेदितनैजभावं
नेत्रं मनो मे कुरुते कृतार्थम् ॥२०२॥

विभासं, विशिष्टः भासः दीप्तिर्यस्य तथा भूतम् । नैजः स्वकीयः । नेत्रमिति कर्तृपदम् ॥ २०२ ॥

दीपे निर्वाणमुपयाते गृहप्रान्ते संचरमाणस्य कृष्णस्य दर्शनाय दीपसम्पादनकैतवादितो गमिष्यामीति निश्चित्य

निशि ननान्दृशय्यायां तथा सह्यालपन्तीं राधां कवि र्वर्णयति—

ननान्दृशय्यां समधिष्ठितायाः
श्रीकृष्णसम्मेलनलालसायाः ।
स्नेहातिरेकं तु विलोक्य दीपे
नेत्रे विखिन्ने वृषभानुजायाः ॥२०३॥

शय्यामित्यत्र "अधिशीङ्स्थासां कर्म" त्यनेन द्वितीया। श्रीकृष्णेत्यादौ श्रीकृष्णेन संमेलने लालसा यस्याइति व्यधिकरणबहुव्रीहिः "सप्तमी विशेषणे" इति ज्ञापकसिद्धः। स्नेहातिरेकं, तैलस्याधिक्यम् । विखिन्ने इति, दीपनिर्वाणस्य शाघ्रासम्भवादित्याशय: ॥ २०३ ॥

ननान्दुर्निकेतने निशायां आसीनां कृष्णैकमानसां राधां कविः प्रतिपादयति—

यत्नैरनेकैरपि नावलग्नां
निश्यर्गलां वीक्ष्य ननान्दृहस्तैः ।
श्रीकृष्णसम्मेलनलालसाया
नेत्रे प्रसन्ने वृषभानुजायाः ॥ २०४ ॥

नावलग्नामित्यत्र नैषधे "अधुनीतखगस्सनैकधे" त्यत्रैव व शब्देन समासः । निशि, रात्रौ । अर्गलां, कवाटच-न्धनीम् । हस्तैरिति बहुवचनं तद्गतव्यापारबहुत्वाभिप्रा-येण । प्रसन्ने इति, ननान्दरि शयितायां द्वारस्थाविवृन-तया कृष्णागमनसम्भवात् ॥ २०४ ॥

इत्तनंङ्केतां वाटीमावरणेन भ्रात्राऽतिरुद्धां विलोक्य अप्रसंकेत स्थानतया खिद्यन्तीं राधां कविर्वर्णयति—

भ्रात्राऽतिरुद्धां वृतिभि स्सुवाटीं
मर्त्यैरगम्या मपरैर्विलोक्य ।
श्रीकृष्णसम्मेलनलालसाया
नेत्रे विखिन्ने वृषभानुजायाः ॥२०५॥

अपरैः, भ्रातृभिन्नैः, मर्त्यैः, नरैः, अगम्यां, गन्तुम-शक्याम् ॥ २०५ ॥

मां द्रष्टुमिच्छोः परितो भ्रमन्त्याः
लोकात्पुनस्स्वं परिगोपयन्त्याः ।
त्रस्ते सकामे चकिते सलज्जे
मुग्धे सहासे नयने स्मरामि ॥२०६॥

स्वम्, आत्मानम् ॥ २०६ ॥

स्निग्धं विभासं सरसं सहासं
मुग्धं सकामं प्रणयाभिरामम्।
लुब्धं प्रसन्नं विवशं प्रियाया
अद्यापि नेत्रं हृदयं दुनोति ॥२०७॥

स्फुटम् ॥ २०७ ॥

वक्रीकृतग्रीवदृशं हसन्त्या
अनुव्रजन्त्यास्सखितो मिषेण।
केनापि सप्रेमविकाशितश्रि
नेत्रं कृतार्थीकुरुते न मां किम् ॥२०८॥

वक्रीति, वक्रीकृता ग्रीवा यत्र, तथाभूता दृशायत्रेति बहुव्रीहिगर्भितो बहुव्रीहिः, क्रियाविशेषणतयेह द्वितीया। किं न कृतार्थीकुरुते अपितु कुरुतएवेति काकाव्यज्यते ॥२०८॥

मुग्धराधासुरतं कविराह—

उन्नाम्य वक्त्रं परिचुम्बिताया
विद्युल्लतायाइव चञ्चलायाः

नेत्रे प्रसन्ने सरसे, तथापि
नोन्मीलिते स्तः शतयत्नतोपि॥२०६॥

नोन्मीलिते इति, तेन लज्जातिशयो व्यज्यते ॥२०६॥

सुरते राधायानयनं कृष्णो निरूपयति—

धृत्वा भुजाभ्यां परिचुम्बितायाः
आलिङ्गिताया अति कौतुकेन ।
नेक्षुः, सिता नो, न सुधापि तादृक्
यादृक् प्रियाया मधुरं सुनेत्रम्॥२१०॥

स्फुटम् ॥ २१० ॥

सखीभिस्सह स्नाने तासु स्नातास्वपि विलम्बं कुर्वतीं
राधां कृष्णो वर्णयति—

आलोकितुं मां प्रविलम्बितायाः
स्नानच्छलेनैव जले स्थितायाः ।
आयाति याति प्रणयं करोति
नेत्रं सरागं रुचिरं मृगाक्ष्याः ॥२११॥

स्फुटम् ॥ २११ ॥

शून्ये गृहे कृष्णस्य सन्निधाने तत्र स्थितौ शंकमानाया बाह्यप्रदेशगमने तस्यानुरागमधिगमिष्यतो दुष्टजना द्भिभ्यस्या राधाया दशां कविर्निर्दिशति—

> विज्ञायशून्यं गृहमागतायाः
> दृष्ट्वा हरिं तत्र विशङ्कितायाः ।
> दुष्टाद्भयाद्बाह्यमनागतायाः
> त्रस्ते चले स्त स्त्रपितेच नेत्रे ॥२१२॥

दुष्टादित्यत्र भयहेतौ पञ्चमी । बाह्यं, बहिर्देशम् ॥२१२॥

राधाकृष्णयोरन्योन्यानुरागं कविः प्रतिपादयति—

> मुग्धं मनोज्ञं कुटिलं विकारि
> स्निग्धं मनोहारि विकाशितश्चि ।
> श्रीकृष्णनेत्रं तु राधिकाया
> नेत्रं मुदा क्रीड़ति कौतुकेन ॥ २१३॥

स्फुटम् ॥ २१३ ॥

राधाया नयनं कविर्वर्णयति—

किं कन्दर्पशरः, किमम्बुजमिदं, किं खञ्जरीटो,

विषं किं, मीनः किमु, किं सुधा, कुवलयं किं, भेदनास्त्रं किमु। किं शृङ्गाररसः, सुपुण्यलतिकाप्रोद्यत्फलं किं, पुनः श्रीराधानयनच्छलेन मुरभित्सर्वस्वमाभाति किम् २१४

भेदनास्त्रं, भल्लकः। मुरभित्, कृष्णः। शुद्धसन्देहालङ्कारः ॥२१४॥

एतत्काव्यस्य पठनादौ सर्वेषां प्रवृत्तये विविधं फलं प्रदर्शयति —

श्रीराधानयनस्य वर्णनमिदं शृङ्गारिणे सद्रसं, पुण्यं पुण्यमते, रसान्तमनसे शातं रुजोभागिने। आरोग्यं, कवये मुदं, सुकृतिने भक्तिं, प्रदत्तेऽचिरात् प्रेम्णा संपठितं श्रुतं परिणुतं संसेवितं सर्वदम् ॥ २१५ ॥

शातं, सुखम्। रुजोभागिने, रोगिणे ॥ २१५ ॥

एतत्काव्यस्य नायिकां नायकंच सुखेन बोधाय निर्दिशन् कविः प्रणयसंविधाने फलमावेदयति—

श्रीराधा नायिका यत्र नायको भगवान् स्वयम् । यैरत्र विहितं प्रेम तेषां किं दुर्लभं भुवि ॥ २१६ ॥

अत्रेति,यदर्थस्य तदेवेदमादिनाऽपि परामर्शस्य दर्पणादौ प्रतिपादनान्नानुपपत्तिः ॥२१६ ॥

एतत्काव्यस्य प्रसिद्धिकरणाय कविः विरञ्चितः प्रार्थयते--

सन्नेत्रद्विशतीनाम ग्रन्थो मोहनशर्म्मणा ।
श्रीमता सूरिणाकारि ख्यातव्यः कृपया बुधैः

इति हारितास्राभिधानान्वय दुग्धोदधि सुधाकर महा महोपाध्याय ग्रामाद्युपार्जक श्री मोहनमिश्र विरचितं श्री राधानयनवर्णनात्मकं खण्डकाव्यं सम्पूर्णम् ।

सूरिणा, पण्डितेन । बुधैरिति, तैः ख्यापिते प्रतिष्ठितत्वं भवतीति तथाभिहितमिति ॥ २१७ ॥

इति मैथिलश्रोत्रिय श्रीबालकृष्णमिश्रप्रणीता राधानयनद्विशती नाम काव्यटीका समाप्ता ।

श्रीरस्तु—

## अधुनावधिटीकाकृतानिर्मितानां पुस्तकानां नामानि

| | | | |
|---|---|---|---|
| १ | लक्ष्मीश्वरीचरितं (सटीकम्) | | मुद्रितम् |
| २ | उभयाभावाक्षिवारकपरिष्कार प्रकाशः | | मुद्रितः |
| ३ | न्यायसूत्रवृत्तितात्पर्यविवृतिः | | मुद्रिता |
| ४ | राधालयनद्विशतीटीका | | ,, |
| ५ | मुक्तिवादटिप्पणी | | ,, |
| ६ | अनुमानखण्डस्य क्रोडपत्रम् | * | अमुद्रितम् |
| ७ | शक्तिवादस्य ,, | * | ,, |
| ८ | श्री रमेश्वरकीर्तिकला (पद्यकाव्यम्) | * | अमुद्रिता |
| ९ | पदार्थतत्त्वविवेकः (मीमांसा) | | अमुद्रित |
| ,, | लकारशक्तिनिरुक्तिः | * | अमुद्रित |
| ११ | शाब्दबोधपरीक्षा | * | ,, |
| १२ | लक्षणा परीक्षा | | ,, |
| १३ | व्यक्ति निरासः | | अमुद्रितः |
| १४ | अशौचसङ्करव्यवस्था निसंक्षिप्तटिप्पणी | | मुद्रिता |

---

* एतत्पुष्पाङ्कितानि पुस्तकानि अचिरान्मुद्रितानि भविष्यन्ति

# कविकुलानुक्रमणिका

## म० म० मोहन मिश्रः ।

- अभयनाथ मिश्रः
  - हर्षनाथ मिश्रः
    - श्रीगङ्गानाथ मिश्रः
      - श्रीइन्दुनाथ मिश्रः
    - प्रजानाथ मिश्रः
  - गोपीनाथ मिश्रः
    - श्रीशम्भुनाथ मिश्रः
      - श्रीमन्ननाथ मिश्रः
      - श्रीलेखनाथ मिश्रः
      - श्रीछत्रनाथ मिश्रः ।
      - श्रीगोकुलनाथ मिश्रः ।
- सिद्धिनाथ मिश्रः

# भूमिकायाश्शुद्धयशुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| मिश्रास | मिश्रात्म | १ | २ |
| च्यन | च्यवन | " | ६ |
| सॊन | शोन | " | १४ |
| का।विद | कोविद | २ | ३ |
| श्रमितः | श्रांणतः | " | १३ |
| प्राम | प्रामा | " | २० |
| चिभव | चिभ | " | " |
| शृवाह्रि | ऽश्वाह्रि | ३ | ३ |
| तीर्थ | तीर्थ्यं | " | ५ |
| चिद्धान्त | सिद्धान्त | " | ७ |
| जगम्य | जगम्थ | " | १० |

---

॥ श्रीः ॥

# श्री राधानयनद्विरत्याश्शुद्धयशुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ |
|---|---|---|---|
| * ङ्गय | ङ्ग्य | ३ | १ |
| मजानां | जनानां | ४ | ३ |
| त्यत्रेव कर्मधारयः | स्तोकनम्रास्तनाभ्या-मित्यत्रेव प्रकृतेऽपि-क्रियाविशेषणेन क-र्मधारयः | " | २० |
| तंनैत | तेनैत | ५ | ४ |
| यति, | यति | " | १७ |
| खे | खेदं | ६ | १० |
| वत्वं | वत्त्वं | ८ | ११ |
| अन्यव | अन्येव | ६ | ८ |
| नवेति | नैवेति | १० | २ |

---

* इयमशुद्धिरनेकत्र जाताऽपि विस्तृतेर्भयेनैकत्रैवनिर्दिष्टा। एतेनैव च वबयोः पदच्छेदस्य च यथावत्सन्निवेशाभावो न संशोधितः।

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ |
|---|---|---|---|
| वयर्थ्यां | वैयर्थ्यां | १० | २८ |
| प्रौष्ठीं शफरीम् | शफरीं प्रोष्ठीम् | १२ | २ |
| रसिकेत्यादि | रसिकेत्यादि | ” | १६ |
| प्रभात | प्रभातं | १३ | १८ |
| यऽमिति | यमिति | १४ | ३ |
| षिगवन्ती | षिण्वती | ” | १ |
| रौषधि | रौषध | २७ | ८ |
| मूर्छति | मूर्च्छति | १८ | १५ |
| तशय | तिशय | १६ | १२ |
| अभा | आभा | ” | १७ |
| शन्य | शून्य | २० | ६ |
| विलोकनेन | विलोकनेन | २१ | १ |
| शोभनं मन एव सुमना- देवः, | सुमनः शोभनं मनः | २३ | ४ |
| मूलकं | मूलकमेकदेशवि- वर्त्ति | ” | ८ |
| कान्ते | कान्तम् | २४ | १ |
| लुप्ता | लुप्तो | २५ | ७ |
| मेतं, | मेतत् | २६ | ६ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ |
|---|---|---|---|
| पत. | पतत् | २६ | १४ |
| आगतंवा- | ,, | ,, | १४ |
| कृताथ | कृतार्थ | २७ | १ |
| कःरीन | रहटनि | २८ | १० |
| तादात्म्या | तादात्म्या | २६ | १६ |
| गूणी | गुणी | ३० | १७ |
| श्रयती | फिलेती | ,, | १८ |
| किमपीवि | नवेति | ३१ | १ |
| लाक | लोक | ,, | ३ |
| या | यो | ,, | ४ |
| मरोचा | मरिचा | ,, | ६ |
| न्याम् | न्याम | ,, | १० |
| अधी | आधी | ,, | १२ |
| तेनव | तेनच | ३३ | १ |
| कय | कूय | ३४ | १४ |
| रस्फु | स्स्फु | ३५ | २ |
| क्रोधेण | क्रोधेन | ३६ | ४ |
| तद्दशं | तादृशं | ,, | ५ |
| दृशनं | दर्शनं | ,, | १४ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ |
|---|---|---|---|
| व ऽशा | ऽवशा | ३८ | १३ |
| जननि | जनि | ४२ | ३ |
| ख्रियत: | ख्रियंत: | ४६ | १ |
| ि तणांद्यां | िथतांराद्यां | " | १ |
| वंम | वर्म | ४६ | ११ |
| प्रणर्त | प्रनर्त | ५० | ३ |
| र्वाह् वैक्ष | वह्निवेलक्ष | " | ११ |
| नेत्र | नैत्र | " | ३ |
| यौं वने | यौवने | " | ११ |
| प्रपा | प्रया | " | १५ |
| ह्रीभ | ह्रीभी | ५१ | १ |
| स्तनूर | स्तन्र् | ५१ | ६ |
| श्रूश्री: | श्रिय: | " | १६ |
| विचित्य | निचित्य | ५२ | १ |
| वनस्य | वनस्यै | " | २ |
| विचित्य | निचित्य | " | ५ |
| नोन्मिलितं | नोन्मीलितं | ५५ | १ |
| हृताश्रि | हृताश्रि | ५६ | २ |
| नेत्रनिखिन्नं | नेत्रंविखिन्नं | ५७ | १५ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ |
|---|---|---|---|
| शूष | शूख | ५८ | ६ |
| सखि | सखी | ५९ | १२ |
| ऽतिखिन्नो | विखिन्नो | ६० | १२ |
| अति | वि | ,, | १४ |
| बोधदि | बोधद | ६३ | ८ |
| त्तं | वृत्तं | ६६ | १३ |
| गते | दूरगते | ,, | १४ |
| स्सखा | स्सखी | ६८ | १४ |
| स्थन | स्थान | ७१ | १० |
| वणं | वर्ण | ७२ | १ |
| बध्यते | बुध्यते | ७४ | ४ |
| हा ? | हाऽऽ | ७५ | ७ |
| वतः | वंतः | ,, | १५ |
| विदेशगतः | विमुक्तः | ७८ | २ |
| पात | पान | ७९ | ८ |
| कण | कर्ण | ,, | १४ |
| भूभूषित | भूषितम् | ८२ | ८ |
| शुच्चकैः | शुच्चकै | ८४ | ३ |
| जनोज्झितोऽ | जनोज्झितोऽ | ८५ | २ |
| पराध्य | परार्ध्य | ८७ | ५ |

| अशुद्ध | शुद्धम् | पृष्ठे | पंक्तौ |
| --- | --- | --- | --- |
| लाक | लाक | ८६ | ११-१६ |
| निय | नियम | ६० | २ |
| अशु | असु | ६३ | १६ |
| दीय | वीर्यं | ६६ | १२ |
| पाग्यति | पुष्णाति | ६८ | १ |
| गत्वत्या | गतवत्या | " | ५ |
| वर्तिनीत | वर्तिनी | ६६ | ८ |
| मुखायाः | मुखेन | १०० | १० |
| कविः | कृष्णः | १०३ | १२ |
| शाम्भा | शोभा | १०४ | ३ |
| चरंणे | चरणे | १०८ | ६ |
| कक्षता | कक्षता | १०६ | ५ |
| कव्वा | कल्वा | १११ | १ |
| [illegible] | [illegible] | " | १३ |
| द्वितीया | कर्मसंज्ञायाम् द्वितीया | ११३ | ७ |
| द्वारस्त | द्वारस्य | ११४ | ४ |
| [illegible] | स्वं | ११८ | २ |
| मते | चिते | १८ | १० |
| [illegible] | [illegible] | " | " |

